॥ श्रीश्रीगौरहरिर्जयति ॥

गौड़ीयग्रन्थगौरवः—

प्रकाशितग्रन्थसंख्या—१२१

# आमोदमहाकाव्यम्

रचयिता

## श्रीअनूपनारायण भट्टाचार्य्यः



सम्वत्—२०२०
मूल्य— ॥)

प्रकाशकः व मुद्रकः—
कृष्णदासबाबा

गौरहरिप्रेस, कुसुमसरोबर

सङ्गणकसंस्करणं दासाभासेन हरिपार्षददासेन कृतम्

# ❀ आमोदमहाकाव्यम् ❀

श्रीराधाकृष्णाभ्यां नमः

श्रिया सम्राजन्त्या सुजननयनानन्दजननो
मनोहारी नारीगणमदनकारी निजतनोः ।
विधू राधानन्दी मदनमदसंदीपितमते—
रुदाराशी राशीकरकरविलासी बिजयते ॥१॥

प्रियप्रेम्णा पूर्णा मदनघनघूर्णा चलदृशा
निपीय श्रीराधा मुदितमतनोत् यं सरभसा ।
स्पृहासिद्धिज्योत्स्नामनुकिरतु तस्य स्मितकला
हरेरन्यानिचौ निजपरिजने प्रेमविमला ॥२॥

हरिप्रेमोन्मत्तः प्रभुरनुसरन् यस्त्रिदशतां
परानन्दस्वादी विदधदवतीर्णः सदयताम् ।
सदोत्तंसीभूयान्निखिलसुमनो नन्दनतनोः
शचीसूनोरस्यामलचरणपद्मं मम तनोः ॥३॥

किमेता मद्वक्त्रान्निरगुरिति गृह्णीत न बुधा
निबद्धाः श्रीराधाव्रजविधुगुणाम्रेडनसुधाः ।
जगन्नाथक्षेत्रोद्भवभवमहामोहशमक—
प्रसादं काकास्याद्गलितमपि विष्णोस्त्यजति कः ॥४॥

मधौ माकन्दालीमुकुलमधुमाद्यन्मधुकरे
मुकुन्दानालोकोन्मदनमनउन्मादचतुरे ।
वहन्ती श्रीराधा निमिषयुगबुद्धिं प्रियतया
सखीमूचे कृष्णानवकलनपीनोत्कलिकया ॥५॥

बसन्तोऽयं कालो विकलयति पुष्पेषुरिपुणा
धुना ज्यासंयोगं रचयति वयस्योपकरणात् ।

सकामोऽयं कामो न किमु कुलनारीनिहनने
न जाने प्राणेशो रचयति विधिं किं मयि जने ॥६॥

न धीरत्वं चित्ते मम वत बसत्यालि मुरली—
धरायाने मानं नहि न मदनस्तत्र हि बली ।
बली पुष्पेषुः स्याद्यदि विबुधशत्रून् जितवति
प्रतप्तां तत् किं मामजितदयितोऽग्रे व्यथयति ॥७॥

न मे दोषः कश्चित् कुरु सखि विवेकं स्मरहताः
कथञ्चित् जीवामो दयितविरहोत्तापदलिताः ।
विना तेन प्राणाधिकसहचरेणायमिह य-
द्दुनीते दुर्न्नीतो मम हृदयलक्ष्यं हृदयजः ॥८॥

न कार्य्या शुश्रूषा विशकिशलयाद्यैस्तु सुदति
ध्रुवं तानीदानीं व्यसनपटुतामेव दधति ।
विचित्र स्त्रक्शोभाशनवसनभोगो ननु मुदे
गदेन म्लानानां न भवति जनानां हि शुभदे ॥९॥

बसन्तो वासन्त्या विकचयति पुष्पाण्यलिगणा
मधूके मोदन्ते मधुषु धृतगानाः पिकगणाः ।
निजैरस्त्रैरेतैरुपकृतरतीशाहतिरियं
ममासून्संहंत्री हरिरिह न चेदेति सदयं ॥१०॥

समीपे कान्तस्य ब्रज सखि हितार्थैकविभवे
मम प्राणान्दत्वा कृतसुकृतसारा भव भवे ।
निगद्या वार्त्तैषा सलघुकृतचेता इह यथा
विधातव्या नव्या बरचतुरता चात्मनि तथा ॥११॥

यथार्थी कुर्व्वाणोऽपठरपचनोक्ति दहति तां
वियोगाग्निर्व्वर्ण्णान्तरयितुमुपाहृत्य तनुतां ।
न यावत् तन्वंगी विरहशिखिवैवर्ण्यभृदियं
प्रवर्ष त्वं गत्वा घनरसदबाक्यामृतचयम् ॥१२॥

हितान्तामस्मृत्वा तव विरहशीर्णामशरणां
किमास्तेऽरण्येऽस्मिन् क्षणमिलितमूर्च्छैकशरणां ।
स कामस्त्वां वामो व्यथयति न किं किं तव दया
न जाता दीनानां परमशरणत्वान्विततया ॥१३॥

अलं चाटूक्त्या वा स्वयमभिसरेदत्र स यथा
यथा वा मद्बाधा न कलयति धीस्ते खलु तथा ।
यथावच्चातुर्य्यं सखि रचय नो यावदुदितः
शशांको निःशंको हरिहयहरिच्चुम्बनरतः ॥१४॥

इति स्वं श्रीराधा परिजनमुदीर्य्य स्मरवशा
ययौ म्लाना मोहं वदनपरिशोषं च सहसा ।
वियोगो वामस्तां प्रति तदपि शिष्टान्तिमदशा-
मुपेक्षेताग्निर्न्न व्यथित इति बुद्ध्या हि महसा ॥१५॥

तदीयं व्यामोहं परिजनगणो वीक्ष्य सकलं
विसस्मार स्माररज्वरशमनभैषज्यममलम् ।
अकार्य्यं कार्य्यं वा किमिति बुबुधेनैव विदधे
परं नेत्रांभोभिर्वहु बिचलितै वृद्धिमुदधेः ॥१६॥

अथान्योन्यं सख्यो जगदुरितिधिङ्नः प्रियसखी
व्यथामेतां वीक्ष्य क्षणमपि वत प्रोतस्रुतमुखीः ।
सखीकान्तौ वीक्ष्यौ किमु मिलितवन्ताविह वने
किमागन्ता कान्तः सति सहचरीजीवनधने ॥१७॥

बिना येन प्राणा जहति हि न कार्य्यो मुदवधे
रयोगस्तस्यायं भव सकरुणो मादृशि विधे ।
इदं किं ते वाम्यं वितरति न लज्जां तनुभृतः
प्रयुज्य प्रेम्णैवां पुनरिह बियोगं रचयतः ॥१८॥

वृथा कस्मादस्मानसमशरहंसि प्रियसखी
बधाद्व्याधोऽप्येवं त्रिफलवधपापान्नहि सुखी ।

वृथैवास्मान्वा त्वं जहि कथमिमां त्वं निजगवत्
सखीं हंसि ध्वंसं निजमपि न जानंन्ननलवत् ॥१६॥

यमुत्पातं मत्वा पुररिपुरधाक्षीद्दर्यतिकृते
स कस्मादस्माकं पुनरपि मनांसि व्यथयते ।
किमीदृङ्मद्भाग्यप्रचुरगुणवत्त्वैव महतां
सयत्नं सापत्न्यात् स्मरमुत सजीवं कृतवती ॥२०॥

ततो भूषां काचित् त्यजति दृशि काचित् जलकणा
दधात्येनां काचित् स्पृशति करकं येन मृदुना ।
तथा काचित् सेवां रचयति सरोजैर्न्न वदलैः
परा अस्याः श्वासप्रशरणमबुध्यन् करतलैः ॥२१॥

अथैतस्या भद्रं कथमपि विधाय प्रियसखी
जगामान्यामान्या गदितुमघहन्तर्य्यभिमुखी ।
प्रवृत्तिं ता दृष्ट्वा निजपुनरूपा लोकनमधु
प्रतीच्छन्ती ऽर्वाला घनजलमिव स्तोककवधूः ॥२२॥

चलन्ती गोविन्दान्तिकमुपवनद्वारि ललिता
पुरो पश्यत् पूर्णं कलसमुपनीतं प्रमुदिता ।
अपश्यत् स्थित्वा सा चिरमथ वनानां न सुषुमाः
सुखं किं प्राणांश्चोज्झहति हि हितार्थं हिततमाः ॥२३॥

ततो बाला नेत्रातिथिमकृत तन्निर्जनवनं
प्रियो यस्मिन्नास्ते सजलजलदाभो मुदयनम् ।
मुकुन्दांगज्योतिः प्रतिहततमः कुञ्जभवनं
रणद्भृंङ्गच्छाया तरुपिकरवाल्हादिमदनम् ॥२४॥

वसन्तोपक्रान्त्युन्मदमदनमादद्यन्मधुकर—
ध्वनीषुग्रव्याधव्यथितविरहिस्वान्तहरिणम् ।
नवीनाम्रश्रेणीमुकुलकुलभुक् कोकिलकुहू—
कुहूगानप्राणग्रहणकरुणा हीनमदनम् ॥२५॥

वसानं हेमाभं वसनयुगमंभोजमरुतां
चयोल्लोलं श्यामं शितकुसुममालं कलयताम् ।
बलाकाली विद्युद्धृतनवघनं संस्मृतवतां
मयूराणां केकाकलकलपरीतं विहरताम् ॥२६॥

समन्तात्संभुक्तैर्न्नवकुसुमया माधविकया
शरोजिन्या साकं शरसिशयने खेलनपरैः ।
वरांगी वक्षोजाचलपतनखञ्जैः श्रितलता—
भुजैर्म्मन्दंमन्दं प्रसरदनिलैर्व्याप्तमखरैः ॥२७॥

ततोऽरण्ये दृष्ट्वा हरिचरणचिन्हानि हरिमा—
हूयन्ती नन्दन्ती पथि लुठति तत्प्रेमसुषुमा ।
न तस्या दोषार्थं भवति परमेषा चपलता
न कस्या उन्मादं जनयति मुकुन्दप्रणयिता ॥२८॥

कुतः कस्मादस्मिन्नतिथिरसि चेत् कुंजभवने
न लभ्यंते स्थानं विरहिहतिदक्षस्मरवने ।
गदन्नस्या हास्यादिति किमपि कृष्णः कपटत—
स्ततः सख्या ईक्षायनमगमदाख्यानमहितः ॥२६॥

कासि त्वं ननु वेदनेदमधुना किं कार्य्यमस्मिन्वने
साध्व्या साध्विकया मदेकहितया संप्रेषितास्मिन् क्षणे ।
आस्तां तत् करणीयमद्य दयितं किं ते ममाकथ्यतां
संपूर्णोऽपि पयोधिरिच्छति न किं पूर्णेन्दुसंयोगिताम् ॥३०

अयि मयि विदितं ते कार्य्यमस्तीत्यशेषं
कथय कथय तत्वं क्षिप्रमेतद्विशेषम् ।
भवति यदविशेषाद्वद्धमेतद्विशेषं
कलयितुमभिलाषो जायतेऽतीवशेषम् ॥३१॥

इत्थं निपीय हरिवाक्यसुधामुदार—
मेषा सहासमितिवाचमुपाचचार ।

कृष्णाय कृष्णगुणरागसुरद्रशोभि--
वन्धूकनिर्गतसुधामिव चन्द्रिकाभिः ॥३२॥

श्रीला कृष्णकथामृतं करुणया लक्ष्म्यग्रनारायणा-
पत्यं पाययति स्म चम्पकलता यानूपनारायणम् ।
ग्रंथे तत् करुणाकणेन जनिते धीमन्मनो मन्दरं
सर्गोऽयं प्रथमो हरिप्रणयिता दुग्धाब्धिमग्नं क्रियात् ॥३३॥

---------------

## द्वितीयसर्गः

प्रसूनार्थं यान्त्या मम भवतु कोऽर्थस्तव पुरः
कथं वा मां वेत्सि त्वमपि कुलबालां वनचरः ।
कथं स्वर्णांगी त्वामृशितमभिधत्तां गृहसुखा—
स्मरः किन्तु स्वैरी वरयुवतिवैरी तव सखा ॥१॥

श्रिता यत् श्रीराधा वनमिह ततस्त्वां गमयितुं
बने तस्मिंस्तस्यास्तव विरहतापं शमयितुम् ।
समायातं शीघ्रं सर श्रृणु कथंचित् श्वसिति सा
त्वदुत्कंठाकुण्ठा त्वयि निरवगुंठातिरभसा ॥२॥

अनागत्या सख्या वधविरचनान्माद्दगेव मे
वधं सद्यो यत्वं रचयसि न तत् कार्य्यमिति मे ।
परं याच्यं नान्यत् तदितरसपर्य्या निपुणता
तवेदानीम्माभूत् प्रियकृतिरितोन्या नहि मता ॥३॥

सखी तापं शीघ्रं शमय चलमास्थालबमत-
स्त्यजान्यत्तत्कार्य्यं गुरु किमपि यद्यस्ति भवतः ।
निजान् लाभान हित्वा शतमपि भवेद्यः परहिते
दयावानानन्दी त्रिभुवनवरं तं हि मनुते ॥४॥

सखी सा तापार्त्ता तव चरणपंकेरुहदलं
नितान्तं ध्यायन्ती विषमशरवश्या सुविमलम् ।
न कस्मादस्माकं जनयति परेषामपि मनः
समुत्तापं धन्यस्त्वमह ह दयार्द्रोऽसि यदि न ॥५॥

स्मरोऽपीत्थं नारीगणहननकर्णान्तिकगुणो
मनो मोहे धन्यो भवति मम सख्या मृदुतनोः ।
धरित्री धर्त्री त्वां स्मरमपि कथंचित स्थिरमना
धुरीणा धीराणान्तिलक हृदि धत्से किमधुना ॥६॥

शची गौरी लक्ष्मीर्जनकतनया वा नहि तथा
प्रिये संरक्ताभूत् त्वयि सहचरी सा मम यथा ।
भवानप्येवं किं सततमनुकूलो न सुमनाः
प्रियायां शारल्यं त्यजसि तदपि त्वं किमधुना ॥७॥

बियोगे ते यस्या जिगमिषति धैर्य्यादि सहसा
प्रदृष्टादिष्टयाद्य त्वमसि मम जीवातुरिव सा ।
असूयन्ती पश्चादियमिति वचो याचनपरं
भ्रमेण त्वां दृष्ट्वा मिलितमनुकूला भवदरं ॥८॥

असामर्थ्यं यान्तं प्रबलनिजमानोपशमने
भ्रमेण त्वां दृष्ट्वा बदति विकला तेऽपगमने ।
अनष्टो नष्टोऽपि भ्रम इयमभिज्ञाय सुमते
रुषा हि प्राणेशो गत इति वदन्ती मृगयते ॥९॥

किरन्तं लावण्यं दिशि दिशि भवन्तं भ्रमभरात्
प्रपश्यन्ती यान्ती स्रजमुपहरन्ती निजकरात् ।
न पश्यन्ती तन्त्री मजति रुदती वक्ति तुदती
मनोऽस्माकं किं किं विरहविकला नो कृतवती ॥१०॥

वसन्तादत्यंतादव मम सखी-- प्राणहनने
सचेष्टादेनां त्वं स्मितमधुरवाचा ब्रजवने ।

निक्रन्तां तामेव स्मरशरविशीर्णार्मविनयः
स्वनाम्नो याथार्थ्यं रचयति सुखे काल इति यः ॥११॥

सखायं मे चन्द्रं पदजयदमुष्या मुखमसा--
बवश्यं हन्तव्या द्रुतमह हते नाति सुयशाः ।
इति स्मारं स्मारं सुरभि सुहृदा किं त्वयि रतां
युतो मर्षी कामो निजशरगणाधीनपतितां ॥१२॥

हरिस्तस्या वाक्यामृतजलधिमग्नोऽतिरभसा--
दमुस्मादुत्तस्थौ कथमपि धुतांगोऽथ तरसा ।
ध्रुवं सर्व्वं देहात्तदमृतमयं वास्पकपटात्
वहिश्चक्रे येन स्तिमितकरणो जायते हटात् ॥१३॥

अयं वारं वारं वचनमधु तस्या मुखपुटात्
पपावत्यन्तं यत् सकलमवमत् सोक्तिकपटात् ।
न चित्रं तद्भ्रान्तं तदुदितमधु प्राप्य रसनात्
सुधाया सा त्यक्तस्मृतिरपि न तद्भ्रान्तगिलनात् ॥१४॥

उदंचल्लोमौघस्मरशरसमुद्भिद्धहृदयं
यदा गात्रं नोत्थापयितुमपि शक्तो भवदयं ।
तदा सद्यः प्रत्युत्तरमितवती सा मतिमती
हरेर्वाक्यात्कर्णौं सफलयितुमत्र स्थितवती ॥१५॥

अथाह श्रीकृष्णो विरचितसखीमोदमहिमा
त्वदीया या वाणी सखि मधु समा मत् प्रियतमा ।
न जाने तत् किम्मामयि रतिपतेस्तज्जयकृते
शरीभूय क्लेशं जनयितुरिदानीं व्यथयते ॥१६॥

मदीयं यत्कामः स्वमकृतसमस्तं यदमुना
प्रहृष्टं तत्तन्नो व्रजति विपरीतत्वमधुना ।
तथाहि प्रत्यक्षं सखि कलय लोम्नामपि गणाः
प्रहृष्टा मे वाणीकृतिमुत लभन्ते वितनुता ॥१७॥

इदानीं का वास्ते त्वदितरहिता मे हिततमे
त्वमेवास्माकीनं प्रियकृतिविधिज्ञा निरूपमे ।
मदीयासूत्रच्च ब्रजसहचरी यत्र परमा
त्वया सुस्था कार्य्या मम हि किल सा जीवनसमा ॥१८॥

प्रियां वा कान्तां वा भुवि गुणवतीं वा तदपरां
न जानेऽहं जाने न च तब समानां च चतुराम् ।
द्रुतं दौत्यं कार्य्यं सखि सहचरी जीवति यथा
विधातव्यं भव्यं वचनमिदमेयादिह यथा ॥१६॥

प्रवीणा चातुर्य्ये किमु न भवती भव्यरचने
न किं विज्ञत्वं ते वचनरचने चित्तरमने ।
तथापि त्वामित्थं प्रियसखि वदामो वयमियत्
वियोगव्यग्रं मां विषमविशिखो नोदयति यत् ॥२०॥

पुरा मत् क्षेमेण प्रियसहचरीमाप्तसुखितां
विधाय प्रत्येकं वद मम यथार्थां कुशलितां ।
अकस्मादाकर्ण्य प्रियहृदयपीडां वलवती
मसूनामत्यागो नहि मम सखी शक्तिरियती ॥२१॥

प्रदत्ता ये प्राणाः प्रियसखि निवेद्येन्दुवदने
भवत्यैतान्कामो हरति वलवत्वेन विजने ।
किमेतानागत्य द्रुतमवति कामान्न भवती
स्ववित्तं नो कस्यापहृतमुपतापाय भवति ॥२२॥

अपि ध्यायं ध्यायं निरवधि भवत्याः प्रणयिना
न्यधायिष्ठा अंतस्तव वहिरलाभादसुखिना ।
मनोभूनाराची भवसि परमंतः स्थितवती
वहिस्कर्त्तुं शक्या न भवति यदात्मैव भवती ॥२३॥

स्रजो यस्या गंगा शिरसि शितिवेणी फणिवरो
ऽशितं चेलं कृत्तिर्म्मसृणमसृणं भस्म सद्गुरोः ।

सखी साचेदां चेन्न किमुत पलायेत सगणः
शिवभ्रांत्यैवास्यां चकितचकितस्तर्हि मदनः ॥२४॥

सकुर्वाणो दूत्या सह रसकथालापमनया
भ्रमात् विश्वं राधामयमवददालोक्य सुधिया ।
हिते कान्ते राधे निरुषितवती कुत्र भवती
त्वमेकानेका वा सहचरि चतुर्दिक्षु किमिति ॥२५॥

हसन्तं हृष्यन्तं मुहुरनुभवंतं वररतं
भ्रमन्तं तिष्ठन्तं हितमभिलसन्तं हृदि गतम् ।
रसक्रान्तं राधां भ्रमत इव यं तं निजमतं
वदन्तं शृण्वन्तं समगददियं तं स्वदयितम् ॥२६॥

त्यजाधैर्य्यं धैर्य्यं कुरु मनसि कार्य्ये तव मया
दयाकार्य्या कार्य्या मनसि भवता नो चपलता ।
इदं सत्यं सत्यं वयमपि वदामो हिततमा
समासाद्या साद्या परवहुकथा किं मम वृथा ॥२७॥

दधाना राधाया नलिननयनाया निपुनता
मपीदानीमेवाहमिह भवता योग उशता ।
सतोनासौ नासूपकृतिषु सदा मामिति भवा---
न धाराते चेतो भव रुचिरजा ना तु गुणवान् ॥२८॥

सखी यत्रास्ते सा मम निपुन तत्रैहि गहनात्
न शक्तश्चेत् गन्तुं रतिपतिशराघातदलनात् ।
तदा सैवानेया शुभनिपुनया संप्रति मया
विधातव्यो योगो हृदि तव बियोगोऽस्तु न तया ॥२९॥

भ्रमे नष्टे कृष्णः स्मितमुखसखीमाह हितया
विना मन्ये शून्यं सकलमहमेतद्दयितया ।
त्वया तत्कर्त्तव्यं द्रुतमिह यथा याति सुदती
त्वमेका जीवातुर्म्मम परमिदं वेत्तु भवती ॥३०॥

प्रयाहि त्वं क्षिप्रं भवतु तव पद्या शिवमया
पुनः शीघ्रं सार्द्धं तव निपुणया हे सखि तया ।
समायानं भूयादपि कुरु कुरुत्वं मम हितं
प्रगम्याम्मान्मा विस्मर सकलमेतन्मदुदितं ॥३१॥

इत्थं कृष्णमुखाब्जनिःसृतकथापीयूषसान्द्रान्तरा
श्यामांगं नवनीतकोमलमलंकारम्भुवः साम्बुधेः ।
पायं पायमियं दृशा भृशमथातृप्तापि सख्याहितं
कर्त्तुं गंतुमना मनागपि मनो नान्यत्र धीरादधे ॥३२॥

श्रीला कृष्णकथामृतं करुणया लक्ष्म्याग्रनारायण---
पत्यं प्रापयति स्म चम्पकलता यानूपनारायणम् ।
ग्रंथे तत्करुणाकणेन जनिते धीमन्मनो मन्दरं
श्यामप्रेम सुधासमुद्रनिलयं सर्गो द्वितीयः क्रियात् ॥३३॥

---

## तृतीयसर्गः

तथा रूपं दृष्ट्वा हरिमियमनन्यातितरला
चचाल श्रीराधान्तिकमनुमितस्वार्थकुशला ।
वयस्याभिर्वामेक्षणजघनदोस्पन्दनवशात्
न तासामन्योऽर्थो हरिसुखविधिनैकरभसात् ॥१॥

इहापि श्रीराधा विविधपरिचर्य्यापरनिजै-
र्विमोहा सुस्था चारचि परिजनैरम्बुजलजैः ।
अविश्वस्तस्वान्ता वरसुहृदवाप्तौ निजगदे
मनोभूसंतापज्वरगदविशीर्णा निजमुदे ॥२॥

मनोवांछां पूर्णामवकलय गोविन्ददयिते
विषादं मा कर्त्री कुरु मनसि धैर्य्यं हरिहिते ।

तथैत्राभिः कार्य्यं तव सुहृदिहायास्यति यथा
भयं मा त्वं बाले कुसुमविशिखाददद्य वितथाः ॥३॥

अरातिं दैत्यानां जयति कुसुमेषुः प्रबलया
निजास्त्रीभूतायास्तव सुमुखि यस्याः करुणया।
इदानीं त्वामेव व्यथयति कृतघ्नो यदि भवन्
चिरं कोऽपि स्थाता न खलु कलुषं वर्द्धितभवन्। ४॥

रिपोस्ते कामस्य व्रजति सहकारित्वमुशति
स्मरेषुत्वं गत्वा तव हृदि च तापं जनयति।
हरिर्यस्त्वं प्राणानपि सखि तदर्थं तृणमिव
त्यजस्येतच्चित्रं चरितमखिलानां हृदि तव ॥५॥

यदीयेषूत्तप्ताच्युतशरणमेकात्वमभव-
स्तदीयेषुभूतो विशति वकवैरी हृदि तव।
त्रिलोकीसंजेता यदि सरति नेता धृतशरो
जयार्थं तस्य त्वं न भव शरणं चंचलगुरोः ॥६॥

शरव्यं यस्य त्वं सुमुखि रतिनाथेन रचिता
सबाणः श्यामस्ते किमु निकटवर्त्तीर्न भविता।
ध्रुवं कामः कर्णान्तिकगुणसमाकर्षणबलः
क्षणांते ते भावी सखि निकटभावी सशरलः। ७॥

तमानेतुं कृष्णं प्रियसखि गता काचन सखी
तयानेयः कान्तो लघुनिपुणया यद्यपि सुखी।
वियोगो न स्थाता तव चिरतरं को नहि गतः
क्षणं दुःखं खिन्नो न भवति ततः पण्डितमतः॥

ददानः साम्राज्यं करवितरणाल्हादनकरः
सहायीभूताब्जे क्षणवरतनुभ्योऽतिरुचिरः।
वियोगिन्या नेत्राम्बुजयुगलमुद्राकरकरः
पुरस्तासां प्राचीमुखमथ चुचुम्बे हिमकरः ॥६॥

ततो दृष्ट्वोद्यन्तं लघुहृदयमानक्षयकरं
प्रगल्भानां स्त्रीणां कुतुककुपितानां शशधरं ।
कला तारापंक्ताविव शशधरीयोदितवती
सखीमध्ये राधा निगदितवती सा गुणवती ॥१०॥

न दोषोऽयं तस्या यदिति मदनोद्दीपमुशती
मनोजम्लानांगी हिमकरमियं भर्त्सितवती ।
न को धीरोप्यज्ञो भवति रतिनाथे व्यथयति
प्रमाणं धाताभूदिह हि निजकन्याहृतधृतिः ॥११॥

न जाने किं धत्ते स्मररिपुरिमं मूर्द्ध्नशशिनं
वियोगिस्त्रीनाशाशुगगणमन्मे भू परिजनं ।
तपः शत्रुं मन्वा तृणचयमिव प्रेक्ष्य पुरतः
स्वनेत्राग्नौ योऽस्य प्रियसखमधाक्षीत् स्मरमुत ॥१२॥

मनोभूसंस्थानं प्रदहति समां किं च विषमां
दधद्रत्युत्कंठां वसति हरभालोपरितमां
इमं मन्ये तस्माद्दहनमहमेवात्रिनयनो-
द्भवत्वेन त्वेनं कथमभिदधत शस्त्रमधिनोत् ॥१३॥

उत्पन्नं द्विविधं विषं जलनिधे यत्कालकूटं विधुं
श्यामं शुभ्रमपाद्भुमासहचरस्त्रैलोक्यरक्षेच्छया ।
एकं तद्गलदेशदर्शितमहाशौर्य्यं भवोऽजीर्णयत्
सर्व्वांगे कृतशुभ्रभावमपरं भुंक्तामत्शंकया ॥१४॥

वत विधो विकलो भव यत्
कृता विकलता भवता ज्वलनोपम -
विकलतां यदि यास्यति चन्द्रमा ।
विकलता सखि तर्हि कथं मम ॥१५॥

अभ्यस्तं शिवनेत्रवन्हिगुरुतः किं दाहकत्वं वत
प्राप्तस्ते बिपरीततामथ कुतोऽभ्यासः शशंकाहितः ।

सोऽधाक्षीत् पुरवैरिपीडनपरं कामं सतां वैरिणं
तं सम्बद्धर्य भवांस्तु तेन दलितां मां दग्धवानुल्वनं ।।१६।।

कृष्णपक्षे सति तव पुतनैंद्दशत्वं कलानां
वाधां तावत् कुरु मनसि नो योषितां दुःखितानां ।
हर्त्ता सर्व्वं तव गुणचयं मादृशां तोषकर्त्ता
सोप्यागन्ता त्वयि परमहो पापसंज्ञैव गन्ता ।।१७।।

भक्षितोपि विबुधैर्विधुः पुन
र्वर्द्धते धृतिहरो वियोगिनः ।
दुर्जनस्य नहि नाशने क्षमः स्यात्
सुरोपि सुजनेति विक्रमः ।।१८।।

शंकेऽहं स्फुटममृतभ्रमेण पीत्वा
गीर्व्वाणा विषमिति तं वमन्ति मत्वा ।
नो देवा बिधुविषमत्र जीर्य्यते यैः
शीर्ष्णाधात् खलु शमितो भवोऽस्य वीर्य्यैः ।।१६।।

राहुं कुहूं वालिगुणाभिरामे मध्यस्थमिन्दोः कुरु विग्रहे मे ।
न तस्य मित्रं रिपुरस्मदीयः स्मररतु माध्यस्थ्यविधौ विधेयः ।।२०।।

वियोगिनीघातनजातपापवान्
पतत्यहो यत्प्रतिवासरं भवान ।
स्मरन्नपि त्वं न जहासि किं वुधो
बधोपरागं बत मादृशिं विधो ।।२१।।

स्वर्भानुः किमघानि दैत्यरिपुना चन्द्रः कथं रक्षितः
ख्यातः सोखिललोकतापकरिपुर्य्यर्थं जगत्यां ततः ।
मादृक्ष् सर्व्वजनोपतापकबिधोः शत्रुस्तमः केवलं
चन्द्रः कामवलामहो न हतवान् कामेषु तप्तामलं ।।२२।।
सुधामयसुधाकरेऽप्यनुभबो ममायं कथं
यदिन्दुरनुभूयते दहन एव दीप्तव्यथम् ।

भवेदमृतवर्त्तिनी दहनता न पीयूषका-
दभिन्नहिमदीधिति र्मतिरियं न किं बाधिका ।।२३।।

अमृतदीधितिरेष बिधुः कथं
निगदितो बिवुधैर्गरलोपमः ।
सखि यथार्थमिदं यदि ता हताः
कथमिदं व्यसनं बिषमं मम ।।२४।।

वक्ति कश्चिदमृतांशुसंभवं सागरादपरोऽत्रिनेत्रतः ।
इत्यहो न खलु जन्म निश्चयो यस्य तस्य वद साधुता कुतः।।२५

हन्यतामतिकटुः शितद्यु ति,ः खिद्यतां न भवतीभिरप्यति ।
वेदना खलु गतैब मे तदा यूयमेव सकलाहि तापदा ।।२६।।

ब्रह्मर्षेश्चेत्त्वदीया समभवदहहोत्पत्तिरत्रेस्तदा ते
ब्रह्मर्षित्वं हि युक्तं तदपि च तब मास्त्वस्त्वृषित्वं च माते ।
मातृकप्राणप्रणाशे पटुतमकिमहो दस्यु तां व्याधतां च
प्राप्तोसि त्वं सखित्वं विधुमितिवचनं पृच्छमैनश्च मुञ्च ।।२७।।

पानपात्र इह मे कृताश्रयः पश्य पश्य सहि जीवनश्रयः ।
तत्श्रयं प्रणयजीबनं क्रुधा को रिपुं हि करगं त्यजेन्मुधा ।।२८।।
चान्द्रे जीबन एब संप्रतिहृते सख्युवियोगाद्द्रुतं
न स्थाता मदनस्ततो जहि रिपुं केनाप्युपायेन तं ।
दूरस्थो यदि कृष्णवक्त्ररजनीनाथो न सम्बर्द्धयेत्
कामं बामतया तदा रतिपतिं कामादृशी मानयेत् ।।२९।।

राहुं चेच्छरणं ब्रजामि स बिना कालं ग्रसेदद्य किं
तद्ग्रासं बिदधातु बा गुरुतया बाक्यस्य नस्तेन किं ।
केनापि प्रतिमल्लता नहि गता कृष्णाननेन्दोरबन्
कामं यो मनसि स्थितो विजयते बाह्याबिलोक्यो भवन् ।।३०।।

युष्माकं यन्मतं स्याद्विदधतु न परं बाक्यतो मे हितत्वात्
बुद्धिर्म्मे हि प्रयाता हरिपदविरहोत्तप्तहृद्दुःस्थितत्वात् ।

दुःखघ्न्यो यूयमेव ध्रुवमिति तु मया ज्ञायते गाढ़वैरी
युष्माभिर्देह एवं तदपि कथमहो गुप्यते क्लेशकारी ॥३१॥

विवशा सहसा भवदुषा कियदेतत् प्रखरं प्रलप्पसा ।
विधुमित्रविकत्थनक्रुधा मदनोऽपि प्रतताप नैकधा ॥३२॥

अथ तद्वदनं सपाण्डुतां मदनम्लानमुवाह नम्रतां ।
अनया सुदृशातिभर्त्सितः किमु चन्द्रः स्वयमेव लज्जितः ॥३३॥

अचिरादवशा तदा भवद्वचनोक्तावपि सातिखिन्नवत् ।
दयितं मनसैव संगता द्रुतमन्तर्दृशयाथ चुंविता ॥३४॥

तिष्ठन्तं दयितं तमान्तरविदं यान्तं हसन्तं सदा
स्वान्तध्वान्तनितान्तकृन्तनकरं सानन्दमन्तमुदा ।
स्मारं स्मारमनेकशः स्मरवशादाशावशेषां कुशा
प्राणत्राणपरायणैः परिजनैरिष्टं वचो वाचि सा ॥३५॥

न केवलमिमां दशां विरहिणीत्वमेवागम-
स्तव वसनदर्शनादपि सखि व्यथामाप्नुमः ।
उमेशनयनानलप्रहत एष एव स्मरः
पुनः पुनरहो भवेत् किमिह कुर्म्म हे ते पुरः ॥३६॥
क्षणं विरम हे सखि प्रियसखोऽत्र यावन्न स्वतः
किशोरवर आव्रजेल्ललितयाथवा प्रेषितः ।
बलित्वमपि दृश्यते किमु नवा तवामित्रयोः
पुरा स्मरशशांकयोस्तवहितार्थमुद्युक्तयोः ॥३७॥

शीघ्रमत्र गमनं प्रियस्य ते भावि खिद्यन् मुधा तु तत्कृते ।
विस्मरेन्न मधुपः सरोजिनीं तद्गुणज्ञतिलको गुणार्णि ॥३८॥
गतप्रतीको हरदृक्कृशानोः सूक्ष्मत्वमाप्तो मदनोऽतिभानोः ।
अदृश्यदेहो यदि पीडयेत्तत् मनोभुवस्तस्य न चित्रमेतत् ॥
अमुष्य वैद्यो हरिरेव नापरः
समागते स्थास्यति नैव ते दरः ।

स्थिराभबात्रागमनं क्षणान्तरे
बिनिश्चितं चाटुभिर्निष्यतो हरेः ॥४०॥

ईषत् स्मेरबिलोललोचनमुखव्यालोकवुद्धत्वभाक्
स्वव्यापारनितान्तसिद्धिपरमानन्दस्मितानल्पभाक् ।
लोलापांगेदृशा च वामनयनस्फुर्त्तानुभूत्यै तया
तां योषिन्निवहो दिशं ललितया साक्षात्कृतो धीरया ॥४१॥

श्रीला कृष्णकथामृतं करुणया लक्ष्म्यग्रनारायणा-
पत्यं प्रापयति स्म चम्पकलता यानूपनारायणम् ।
ग्रंथे तत्करुणाकणेन जनिते धीमन्मनो मन्दरं
श्यामप्रेमसुधासमुद्रबसतिं सर्गस्तृतीयः क्रियात् ॥४२॥

---

## चतुर्थसर्गः

बिलोलताराक्षिसुभृंगपंकजाः सखीं कृशामित्रबियोगतो निजाः ।
बिलोक्य पद्मिन्य इवार्य्यमच्युतिं जहुः समस्ता मुखपद्मसंबृतिं ॥१॥

बयं भबामः प्रतिलब्धजीवना बिलोकयन्तो भबन्ती भवत् क्षणाः ।
ददाम चात्मानमथाप्यनेन किं पणो यदस्य प्रियदे तदस्ति किं ॥२॥

बिधीयतां स्वागतिरत्र विश्यतां
प्रकथ्यतां शर्म्म पदं निधीयतां ।
प्रगृह्यतां बारि रजोऽनुधूयतां
स्त्रियोऽत्र वंस्तां ललितां स्मितां चिरात् ॥३॥

प्रतीकसम्पर्कमुदश्रु संकरं सखीजनाली प्रणयात् परस्परं ।
ततः परीरम्भपरायणा सती सतीयमेतन्निजगाद तां प्रति ॥४॥

विधाय ताः स्वागमनादिमादितः
क्रमात् स्म बार्त्ता कथयन्ति तां ततः ।

उपागतास्त्रा ललितां शुभावहां
वचः श्रुते रोदनसिक्तविग्रहाम् ॥५॥

कयाचिदूचे कथयामि किं पुनः स्मरस्य दौरात्म्यमनल्पपापिनः ।
सखीमिमां यो निजमन्दिरीकृतां दहत्यमन्दं समिधं शिखीवतां ॥६॥

क्रिमेष मादृग्वधपापकृत् क्षयं हरेण नीतोऽपि समुत्थितः स्वयं ।
ध्रुवं सदा पापकृतां न पापतः क्षयो भवेत् काचिदुवाच भावतः ॥७॥

जगाद काचित् गतपुण्डरीकं तं दृगम्बुजं कोकनदत्वसंगतं ।
दधात्यसौ चेतसि लोकिताच्युता गतामिताश्रुच्युतिरोमहर्षिता ॥८

इदं विचित्रं सखीनेत्रसारसं सरो निदानं सुतनोरहर्न्निशं ।
घनाघनानां हि कदम्बवज्जलं प्रबर्षतीत्याह परा निरर्गलं ॥६॥

जगाम पद्मेति यथार्थ नामतां
सखीदृगंभोजयुगं तदैव तत् ।
यदा तदीयांघ्रियुगस्य रागिता
गुणं स्वसैत्यं परिहृत्य नीतवत् ॥१०॥

इमां कथं धीमति जीवयाम्यहं जलाब्जसेवादि वृथा पथावहं ।
वलानुजः संप्रति जीवनौषधं मुधा सुधासेचनमन्यथा विधं ॥११॥

यदा सखीचित्तमधुव्रतो पपौ षडिन्द्रियांघ्रिः प्रियवक्त्रसद्मनि ।
गतेऽथ चित्ते स वुवोध पूर्ववत् विभुर्न राजे वहते सुमन्त्रिणि ॥१२

अजस्रसंकल्पितभूरितोषणा समं भविष्यत् सुरेतषु शार्ङ्गिणा ।
तदात्मिकाध्यानवशात् तनुं च न स्मरत्यसावेबमुबाच काचन॥१३॥

उवाच कापि व्यमुहत्क्षणं क्षणं त्यजत्यसौ श्वासगणं क्षणं क्षणं ।
गतत्रपा कृष्ण इति क्षणं क्षणं जुहाब च प्राप्य हरीक्षणं क्षणं ॥१४॥

ज्वरस्तु कान्दर्पिक एष मे सखी व्यधाकरो भौतिक एव हे सखि ।
महौषधं निष्फलतां व्रजत्यतः कयाचिदूचे रुदती सखी ततः ॥१५॥

सखी मनो मोहमये महागजो महान्धकारे मदनेन पातितः ।
भवेत् कथं शर्म्म विधेयमद्य किं मया कयाचिज्जगदेऽन्यदप्यतः।।१६

न यावदेतद्विरहे सा तन्यते निजेश्वरत्वस्य विशेषतः स्थितिः ।
विधेहि तावत् सफलां दिदृक्षुतां परस्परीयां कःपुनः सह स्थितिः।।१७।।

वियोगिनी सा वृषभानुनन्दिनी दशां तु यां यां प्रियतामणेः खनिः ।
जगाम तां तामपरामुहुस्तमां सखी जगादाश्रुमुखीसखीमिमां ।।१८

निशम्य तासां वचनं समाकुलं प्रमृज्य चक्षु द्वयमश्रुसंकुलं ।
सखीपरावृत्तिपरक्रियोन्मुखी ततः समस्ता निजगाद सा सखी ।।१६

व्रजेन्दसूनो र्विरहेण विह्वलां
बिलोकयन्ती वृषभानुनन्दिनी ।
इहैहि कृष्ण क्व गता सखी तया
किं प्रेषितोऽसीति बहु प्रलापिनीं ।।२०।।

युग्मकं—

कृथा वृथामालिगणातिभावना-
मनाथनाथः सहि चाटुकृद्युवा ।
विलोकितः सम्मत एव निश्चितं
वदामि संकेतमितोऽथ याति वा ।।२१।।

यदर्थ आल्यो रचयन् मनोरथं व्यधातदीया चिरवर्त्तिनी कथं ।
श्रुतं हि यावन्महतां न दर्शनं व्यथाकरं तावददृष्टमुल्वणं ।।२२।।

असाधिया सां तु विधाय चिंतनं
मयापि युष्माकमहो प्रयोजनं ।
पुरः स्थिता स्वासुमनो निकृन्तनं
कथं त्विदं स्थास्यति दुःखदुर्दिनं ।।२३।।

हितं भवद्वक्त्रसुधांशवो दधु र्यदीयमस्यारिपुरेष किं विधुः ।
अजानता तेन वत क्व शिक्ष्यते भवन्मुखेन्दुस्वमहत्तरादृते ।।२४।।

स्मरेण साकं किमु चन्द्र-मित्रता
शिबारिभालस्थलवृत्तिखण्डिता ।
सखीमुखीभूत विधुं तमः क्लमा-
द्धुमापतिद्विट् तुदति ह्यलंतमा ॥२५॥

निषिध्यतां पंचशरः श्रमं वृथा कृथानु सख्या वदनेन्दुपीड़नात् ।
क्षणान्तरं कोपि विधास्यते युबा त्वदिष्टमेतन्मुखचन्द्रदंशनात् ॥२६

चतुर्दिगाकीर्णकचेषु वंधनं बिधीयतां चांग सुगन्धिचन्दनं ।
दुकूलमेषा परिधाप्यतां बरं सखीजनैश्चोत्तमभूषणान्यरं ॥२७॥

वदामि बृत्तान्तमहं गुणाम्बुधेः
प्रियस्य दृष्टस्य भवादृशां निधेः ।
मृषा त मे बाक्शृणुतात्र संशयः
प्रणीयतामल्पतरोऽपि नालयः ॥२८॥

वरं गणेया दिबि देबि ! तारका बरं गणेयाः क्षिति शूक्ष्मबालुकाः ।
गुणा गणेया न हरे र्महत्तरैः प्रजेशरुद्रे न्द्रपुरः सरैः सुरैः ॥२६॥

अशेषबृत्तान्तमनेकयुक्तितः
स पूतनामारणकृन्निवेदितः
कठोरचित्तोऽपि कृतो न किं मया
गलत्स्वनेत्राम्बुपरिप्लुतोऽनया ॥३०॥

इयं पटे मे लिखिताग्रदर्शिता प्रियस्य लीना नयनाम्बुनामुना ।
इतोपि नूनं बिधिना न योजना विधीयते नौ वदतेति खिद्यते ॥३१॥

निरन्तरं ध्यायति कुत्र राधिका गदत्यकस्मादिति च प्रियाधिका ।
सुदीर्घनिःश्बासततिं त्यजत्ययं भ्रमादिमामाहूयते विलोकयन् ३२॥

इयं न साधीरिति रोधिनी रसे,
हरेरतस्यां च न तत्त्वचाक्षुषे ।
न बाध बुद्धयैन्द्रियको हि निश्चयः
प्ररुध्यते न्यायविदामयं नयः ॥३३॥

तदीयबक्त्रं बिरहेण प्राण्डुरं यदद्य तद्युक्तमखण्डसुन्दरं ।
बिधुः कलंकी दमनं कथं क्लिं यदेषभेदो विधुतोऽस्य केवलं ॥३४॥

निरन्तरं प्रच्यबदम्बुसंचयं ततोऽस्तसैत्यं प्रियलोचनद्वयं ।
व्यनक्ति रागं किमु नव्यपल्लवं जिगीषदंभोजजयम्मयोत्सवं ॥३५॥

पदा जितं तस्य सरोजमुन्मुखं जितं प्रवालं हि करेण तन्मुखं ।
जयं व्यनक्ति स्वजितस्य पांडुरं गुणं बिधोलुंठदनगंधूसरं ॥३६॥

हे सख्यो न च तायहेत्वनुमितौ सेयं न सत्यामिति,
प्रत्यक्षं प्रतिबन्धकान्नहि भवेत् सैषेतिबाच्यं न च ।
प्रत्यक्षे सति तादृशे कथमसौ बाधेनमादीदृशं
वाच्यं बाधकबाध्यताहि कृपया वैचित्र्यबुद्धे र्न च ॥३७॥

बिशेषं सन्देशं न हि कथयतस्तस्य मदना-
नलोत्तापात् वुद्धप्रियतमसमस्ताशयगणा ।
हितं वक्ष्ये सत्यं यदपि कथितं तत्सुबिततीः
शृणुध्वं युष्माकं कृतिरपि सहाल्पागतिरिति ॥३८॥

सूर्य्ये तापकरे स्थितेऽपि विरहे पुष्फोट हृत्पंकजं
यन्नो नात्र तु कारणं तव मुखं पूर्णेन्दुरस्मिन् क्षणे-
दूरस्थोऽपि स ते मुखेन्दुरधुना प्राणेशि चेतोऽन्तिके
संस्थाय प्रतिबन्धको भवति मे चेतोम्बुजस्फोटने ॥३९॥

बिभ्राणा नवयौवनं सुजघना दिङ्नागकुंभस्तना
क्षीणा वालकुरंगलोलनयना पूर्णेन्दुविम्बानना ।
कच्चिन्नः करुणा कणा बितरणादानन्दयिष्यत्युत
प्रेष्ठे त्वेबमुबाच वाचमुचितां कांतो नितान्तो हितः ॥४॥

कान्ते कामपि कामिनीमुपगतः कान्तो मदीयो युवा
शंकां त्वं विदधासि किन्नु विधिना दूरे स्थिता नुत्सवा ।
अत्रापि प्रतिवंधनं हृदिगता त्वं किं नराधे तथा
नान्यां स्मत्तुमहं प्रभुः खलु यथा प्रीतिं तथा व्यातथाः ॥४१॥

स्मरधनुर्द्धरदुरधरधर्षितो हितकरो न युवा स समागतः ।
इति पुरः शरः बाचमुवाच ते हृदि समागमने धृतनिश्चितः ॥४२॥

प्रलब्धसंज्ञामितिराधिकां च संश्राबयन्ती सकलाः सखींश्च ।
प्रतीतिबीजं रमणस्य चैषा रूपं यथा दृष्टमवर्णयत्सा ॥४३॥

श्रीला कृष्णकथामृतं करुणया लब्धम्यग्रनारायणा-
पत्यं प्रापयति स्म चम्पकलता यानृपनारायणम् ।
ग्रंथे तत्करुणाकणेन जनिते धीमन्मनो मन्दरं
कृष्णप्रेमसुधासमुद्रबसतिं सर्गश्चतुर्थः कियात् ॥४४॥

———

## पंचमसर्गः

सर्व्वाङ्गसौन्दर्यममुष्यचित्ते, विलोकयन्ती दयितस्य सा च ।
सखीसमक्षं क्षणसाश्रुनेत्रा चित्रातिचित्रा समुवाच वाचः ॥१॥

गोविन्द सर्व्वाङ्गमनोरमत्वं निर्णेयमेतत् बचसा कथं तत् ।
निर्णीतमत्यंतसमाहितानां महामुनीनां मनसापि नो यत् ॥२॥

तथापि रूपस्य न तस्य यामी व्यावर्त्तने साहसमुज्जहामि ।
श्रीराधिके ते हि कृपाप्यपात्रं पंगुं गिरिं लंघयते न चित्रं ॥३॥

ध्रुवं सरोजद्युतिहारिचन्द्रा नखच्छलात्तत पदवंधसान्द्राः ।
तत्रैव निर्लाञ्छनता बिशिष्टा सतां रिपूणां बशतापि हीष्टा ॥४॥

मत्वान्यजातिं नखचन्द्रकाणां गणं नु रेखाभिरथांगुलीनां ।
स्वपंक्तिभेदो जलजोत्तमाभ्यां व्यधायि बिप्रैरिब कृष्णपद्भ्यां ॥५॥

विजित्य लोकत्रयमंघ्रितूणा-लये हरेः पंचशरेण बाणाः ।
किं स्थापिता नो मनसोऽभिमान-जयाय पंचांगुलिकैतवेन ॥६॥

क्षिप्ता शिवोल्लासिनी तत्पदाब्जे बाणाः स्मरेणांगुलिकैतवात् किं ।
अब्जस्य नाम्न्यपि काममैत्री भग्नास्तदीशारि शिरः स्थिते किं ॥

पंच त्रिधा किं विविशुर्न्न वाणाः समग्रमस्यैव पदेन भग्नाः ।
तस्मिन्मनोजस्य मिषांगुलित्वाः स्थानत्रये वीतकठोरभावाः ॥८॥

पश्चात् फलं चन्द्रफलांगुलीषूः ससर्ज्जयत् कृष्णपदे समेषुः ।
शंके शरप्रेरण एव शम्भुनेत्राग्निदाहस्मृतिविक्लवोऽभूत् ॥९॥

न यौगिकं पद्म पदं सरोजे स्वयौगिकार्थो न हि तत्र रेजे ।
नास्त्यैव यत्कृष्णपदस्य शोभा पद्मे निजांशास्ततदुन्नताभा ॥१०॥

चक्रे तपस्यां वनसंस्थितिं यत् मुद्रान्वितं संततमम्बुजं यत् ।
कृष्णांघ्रियुग्मद्युतिवासनावत् पद्माख्ययैवच्छविमन्वगात्तत् ॥११॥

पद्मेतिलक्ष्म्यां यदि यौगिकाख्या तथ्या तदा नात्र सतां कटाक्षाः ।
सैतत् पदस्य द्युतिलेपमाप त्रैलोक्यनाथप्रियतां तदाप ॥१२॥

जयेद् यदंगेन मनोज्ञराजं नखेन चन्द्रं द्युतिभिः सरोजं ।
तदात्तसाम्राज्यपदप्रकाश हेतुध्वजं कृष्णपदं ललास ॥१३॥

गोपीमनोवारणराजनिष्ठः सहस्त्रदृक्कामरुचिर्वरिष्ठः ।
वज्रं दधात्यस्य कृताहि सादः स्थानेऽखिला सेचनकेन्द्रपादः॥१४॥

गोपीमनोमत्तमहागजानां वशे क्षमं तत् पदमूद्धतानां ।
दधेऽङ्कुशं नः स्तनकुम्भपातात् स्वाज्ञावहत्वं नयते हि शातात् ॥१५॥

जयप्रकाशाय यदम्बुजस्य दधार पादोध्वजदंडमस्य ।
निजोर्द्ध रेखाकपटेन तत्र सम्यक् त्रपा ह्येव बधोर्जयेन ॥१६॥

सम्बर्द्धिता कालवशादसारा तदूरुयुग्मस्य यदा यदैव ।
सादृश्य वांछां विदधाति रंभासंभावयंत्यल्पदशां तदैव ॥१७॥

तदूरुमालोक्य गजाः सदानं कुर्वन्ति चेदात्मकराभिमानं ।
तन्मूढदृष्टांतविधाभिधानं तेषां सुधीरिच्छति सप्रमाणं ॥१८॥

हरास्तवीर्य्योपि तदूररंभास्तंभावलंवादिव सुष्ठु प्रभाः ।
पुनर्मनोजो जगतो जयाय चिरादुदस्थात् प्रवलो रणाय ॥१९॥

दधाति कुंभौ शिरसा मुकुन्दनितम्बशोभालबनिन्दितौ यत् ।
मूढ़स्य दृष्टांततयाभिधानं गजस्य युक्तं व्यदधाद्विधिस्तत् ॥२०॥

दधाति लोकत्रयरम्यतां यत् तस्योदरं क्षीणमपि प्रियस्य ।
व्यनक्ति तस्योदरवर्ति किं तद् वलित्रयं श्यामलसुन्दरस्य ॥२१॥

दाम्नेव पूर्व्वं नवनीतहारी सखी जनैः प्रेम गुणैरधारिः ।
मध्ये हि वद्धः किल चित्तहारी रेखात्रयादस्ति तदंकधारी ॥२२॥

ममायमित्थं कमला विरोधे वाण्या समंतत् प्रशमार्थमस्य ।
आनाभिवक्षः स्थलरोमराजी रेखास्ति भागाय किमु प्रियस्य॥२३॥

उरस्थलान्नाभिगता तदीयरोमालिरावर्त्त नलब्धशांतिः ।
कस्माच्चिदद्रे ह्रदमध्यपाता यमस्वसा भाति नु कृष्णकांतिः ॥२४॥

वक्षस्थलान्नाभिगता मुकुन्दरोमावलिः श्यामतमा विभाति ।
घनाघनांतः स्थितशुंडिशुंडा ह्रदेऽमृतार्थं किमधः प्रयाति ॥२५॥

नाभौ गता वर्त्तुलतां तदीया रोमावली दैर्ध्यसुदर्शनीया ।
मोहाय नोऽरक्षि मनः प्रमीला मनोभुवा लौहगदेव नीला ॥२६॥

तैः कौस्तुभाद्यैः किमु भूषितं स्याद् उरः स्थलं तस्य विशाल-वल्गु ।
कृष्णांगसंष्पर्शकृतार्थकत्वं येनेकपुण्येन दधत्यफल्गु ॥२७॥

तेनैव किं तस्य सुचारुता स्याद् वक्षःस्थलस्यानुमिता विदग्धा ।
स्वभावलोला कमला निवासं स्थिराकरोतीति यदत्र मुग्धा ॥२८॥

समादरान मित्रकुलानि पाणिपद्मं मुकुन्दस्य पुरो गतानि ।
कृत्वा नखानां कपटेन धत्ते यशो हि मित्राप्रकृति र्विधत्ते ॥२६॥

तदीयलावन्यपयस्यगाधे परं भ्रमन् स्थानमनेत्यराधे ।
अन्विस्य किं कोकनदे करेऽस्य चिरं विरामं विदधाति मत्स्यः ॥३०॥

कफोणिदेशादिरुचिः प्रियस्य बर्ण्या न धात्रापि समग्रमस्य ।
तदास्य शोभामनधीततीर्थाः कथं वयं वर्णयितुं समर्था ॥३१॥

जितं पदेनैव सरोजवृन्दं नखांशुरेवास्य जिगाय चन्द्रं ।
एतद्द्वयोत्कृष्टतमः क्व चारुः स्याद्यस्तदास्य छविसाम्यधारुः ॥३२॥

नार्थोच्युतो विंवमिवाधरोऽस्य तदेवं वेत्यज्ञ समासतः स्यात् ।
विम्बं यतो हीनमथेति वाक्याद् विम्बाधरस्य त्वधरो हरेः स्यात्॥३३

विम्बाधरोसीत्युदितः प्रतिस्वं कैश्चिद्धरि र्विम्बफलं ततः स्वं ।
कृष्णाधरस्योपमितावशक्तं मत्वा द्रुपातं तनुते विरक्तं ॥३४॥

तिलप्रसूनं प्रियनासिकोद्यत् शोभा लवेच्छामकरोत् पुरा यत् ।
तेनापराधेन तिलानि चांते किं तैलयंत्रेण निपीडयन्ते ॥३५॥

तत् किं नु चित्रं जलजं स्वकांतिलेशाज्जितं तन्नयनद्वयेन ।
भवादृशीनां सखि चित्तहस्ती वशीकृतो येन निरीक्षणेन ॥३६॥

पुरारिणा पुष्पशरे प्रदग्धे मत्वा हरात् त्रातुमशक्तमन्यं ।
तमाप रोमालि कटाक्षचिल्लीमिषात् स्मरज्येषु धनुः शरण्यं ॥३७॥

समानता तिष्ठतु तस्य नेत्रशोभालवं यत् समवाञ्छदत्र ।
तेनापराधेन मृगी स्वनेत्रे पादाहतिं रोषवशाद्विधत्ते ॥३८॥

द्वात्रिंशदब्जाधिककान्तिदन्तप्रकल्पितं यन्मुरजिन्मुखांतः ।
कथंचिदस्यास्यकलार्द्ध सान्द्रः कुतः कलाशारदपूर्णचन्द्रः ॥३९॥

समानतामिच्छति चामरोऽस्य चेत् केशपाशस्य मनोहरस्य ।
वालो न कः स्याच्चपलः स तेन कार्ये नियोज्यः करचालनेन ॥४०॥

किं चामरस्यैव जिगीषया स वक्त्रस्य वक्रः प्रियकेशपाशः ।
कौटिल्ययुक्तेषु जनेषु दोषः स्यान्नो हि कौटिल्यगुणप्रकाशः ॥४१॥

वेणी तदीया किमु नागपाशो मनोभुवा स्थापितमस्त्रमस्ति ।
वद्धो यतोन्यत्र गतौ समर्थो नाद्यापि सख्या मम चित्तहस्ती ॥४२॥

मुग्धे ते दयितोऽधुना तव कथामाश्रुत्य हे राधिके
नोत्थानुं चलितुं वहु प्रलपितुं तादृक् समर्थायते ।

किंतु श्यामलकोमलांगपुलकैरुत्फुल्लनीपश्रियं
न्यंकूचक्रे सखि ज़ृंभमाणवदनो धीरोप्यधीरायते ॥४३॥

औदार्यं रमणीयता चतुरता सद्वाकच्यता धीरता
सौहार्दं किलकिंचितं तरुणता मोट्टायितं भव्यता ।
एवं केन गुणा निरंतरमलंकारायमाणा नु ते
कान्तस्य त्वदयोग एव तु हिते ह्यांगि वाणायते ॥४४॥

पराद्धीदप्यूर्द्धा यदि भवति संख्या बिधिरपि
स्वयं कर्त्ता तस्या यदि स न बिनाशी कथमपि ।
अजस्रं व्यापारी स यदि सहलोकत्रयजन-
स्तथापि स्यान्नायं कृतहरिगुणाशेषगणनः ॥४५॥

स्थित्वा संततमंतरे हि भवती दूराप्यदूरायते
तस्याम्भोरुहलोचने प्रणयिता दास्यैकलोभस्य ते ।
सा किं साकमये निशां युगसमां तेनातिसंतोषिणा
नैष्यत्याशुनिमेषबन्न भवती प्रेम्ना सुनृम्नात्मना ॥४६॥

इत्थं ज्ञात्वा मुदितहृदयास्ता समस्तास्तदूतीः
साध्वी ताबद् भबति भबती राधिका कृष्णदूती ।
बारं बारं प्रणयमधुरामेबमुत्का च बाचं
राधानंगव्यसनहरणे मंत्रयन् चित्तरोचं ॥४७॥

कृष्णा कृष्णकथामृतं करुणया लक्ष्म्यम्रनारायणा-
पत्यं पाययति स्म चंपकलता यानूपनारायणं ।
काव्ये तत्करुणाकणेन जनिते धीमन्मनो मन्दरं
श्यामप्रेमसुधासमुद्रवसतिं सर्गः क्रियात् पंचमः ॥४८॥

---

## षष्ठसर्गः

सखी मुखोदितबचनं सराधिका विधायता वहु बिवृतं बिवेचिकाः ।
बियोगजव्यसनहरं ततः परं स्त्रियः परामृशुरिदं परस्परं ॥१॥

हटात् क्रिया न कृतिज्ञनैः क्वचित्कृता
सुखाय नो भवति हि निर्बिबेकता ।
अतो बुधैरिति गदितं प्रमादिभिः
सुधीर्बसेत् क्षणमपि ना बिवेकिभिः ॥२॥

सुधीरपि प्रतिदिवसं जनेन चेद्-
बिवेचना विरहता समं बसेत् ।
विवेचनां त्यजति तदा यतो निजान्
सहासनाज्जहति जना गुणागुणान् ॥३॥

वुधो ध्रुवं दिनमणिवद् भवेन्मनः प्रमूढ़ता तिमिरगणप्रणाशनः ।
प्रसन्नतां जनयति यः सतां हृदंवुजे बचो गणकिरणैः प्रमोददं ॥४॥

विविच्य तत् प्रिय निकटेऽधुनागति-
र्विधीयतामयमुदितस्तमीयतिः ।
चरंति नो कति कति किं शठाच्छलात् ।
भयंकरी रजनिरियं तु तद्बलात् ॥५॥

कृतिं पुरा रचयति यो विवेचनात्
समाकुलो भवति ततोऽरिधर्षणात् ।
प्रशंसितः क्वचिदपि नैब दुर्मति-
स्तथाबिधो वद भुवि को बुभूषति ॥६॥

सहानया प्रियनिकटे न चेद् गति र्विधीयते न तदुभयोः प्रियाकृतिः।
न च प्रिया चरम दशामपीयुषां कलंक-संकुलसुखिता महीयसां ॥७॥

इयं च किं प्रियनिकटे गतौ भवे-दलं रतीश्वर-शरतो क्षमाजवे ।
व्रजेच्च चेदलघुपदं वृहत पथं द्रुतं क्षमा प्रियनिकटे गतौ कथं ॥८॥
समाकुलं स्वजनकुलं समंजसा सखीव्यथासमनमतिर्विलोक्य सा ।
जगाद ताः प्रियनिकटे सखी गतिं नयान्विता हृदि दधती सखीधृतिं॥
वृथा हृदो न चपलता विधीयतां समाकुलो नहि लभते कृतार्थतां ।
व्यथोत्तरं सुखमथ सा सुखोत्तरं भ्रमत्यरं दिनरजनीव दुस्तरं ॥१०॥

उदेति च प्रतिदिवसं ग्रहाग्रणी स्फुटत्यपि प्रतिदिवसं च पद्मिनी।
भवन्यपि प्रतिदिवसं हि मुद्रिणी न धैर्य्यात् चलति ततः सरोजिनी ॥

न संस्पर्शं ब्रजति पुन गु णाधिकं किमस्थिरा यदि परगा तमेककं ।
निशासु किं कुमुदगतापि षट्पदी न पद्ममाश्रयति दिने विशारदी ॥

वुधैः समं परि रचितारि-भावतः क्व दुर्य्यशो न च भुवि को व्यगाहत ।
रवेः करैर्न्नैव जलदाविरोधकाः प्रमाणतां खलु दधतीह मेचकाः ॥१३॥

अधीजनो निपुणधियः समावृतेः समर्थतां ब्रजति कुतोऽयशः कृते ।
शरद्घनो नहि रविभाः प्रणाशनात्तमः समानयनपटुर्व्वहुत्क्षणात् ॥१४॥

महाजनः प्रभवति दूर्य्यशः कृतौ रिपोरपि प्रियसखि न प्रभुः क्षतौ ।
हरिमु रं क्षयमपि यत् प्रणयीतद् यशोगणक्षयपटुधीस्तु नाभवत् ॥

महाजनः परमयशः प्रमज्जितं,श्रियं हरन्नपि रचयेन्न निर्जितं ।
गतश्रियं किमु कुमुदं विशारिभि, स्तमोगतं रविरकरोन्निजांशुभिः॥

उपायतो यदि बलते जनस्तदा सुरोप्यलं न भवति तत् प्रणाशदाः ।
अनुन्मना वत पतगो भवेद् यदा न तद्ग्रहे मृगयुरपि प्रभुस्तदा ॥१७॥

प्रयत्नवान भवति सुधीः कृते श्रियः प्रयत्निनः करमिलिता हि सिद्धयः ।
अयत्निनं जहति बरा अपि श्रियः स्वयं यथा गुणरहितं परस्त्रियः ॥

न दुर्म्मना भव रचय स्थिरं मनो विधूनय प्रियसखि हे रजस्तनोः ।
बिभूषितां बितनु तनु त्वमात्मनः सखीगणा इति बदतालिमात्मनः ॥

ततो गतिः प्रियनिकटे बयस्यया बिधीयतां लघु हितया सहानया ।
बिलंबितां रचतति कोऽस्य कर्म्मणः प्रधीरपि द्रु तरचनोचितो जनः॥

विभूषणं प्रिय रतये तथा तथा सखीतनावपि बहुधा बितन्यतां ।
विभूषिता यदि नलिनी मधुव्रतैस्तदा ब्रजेदति महतीं हि रम्यतां ॥२१॥

सुधाकरो ननु पिहितो बलाहकैः स च प्रियस्त्वदगमनात समाकुलः ।
न का भवेदभिसरणे समु द्यता मिलेद् यदीदृशसमयोऽतिदुर्मिलः ॥२२॥

अभीतिदां स्वजनगिरं ततः परं परस्परं परहितकृत्कृतादरम् ।
निशम्य सप्रियजनसंचयो चिरं क्षणान्वितो निगदितवानिमां गिरम्॥

अलंकृतिं कुरु कुरु भो करादिषु त्वरान्विता चल चल च प्रियोन्मुखं ।
त्यज त्यज द्रुततरमालि नूपुरं घनावनाबलिरधुना शृणोति खं ॥२४॥

बिभूषणं सुतनु तनौ ततो परे सखी जना लघुरचयाम्बभूविरे ।
प्रियः स यः प्रियमतनोऽभियोजनाद् विनापिदोऽिब पुषोविबेचनात्॥२५

सकंकणाबथ रचितौ सखीकरौ कयाचनांगदबलयादच् पष्कृतौ ।
यथास्थलं व्यधित पदांगुलिश्रबः सुभूषणं सुतनुगणः समुत्सबः ॥

सगोस्तना सपदि कृता कयापि सा सगुछिका परिरचिता कयाचन ।
ललाटिकां सह दयितैकयष्टिकां सखीतनौ व्यधित ततः सखीगणः॥

बिमोचयन् सितवसनं हसन्मुखा ततोसितांसुकमपरा तनौ सखीम् ।
अचीकरत् किमु बिधुसंबृतीच्छया कूहूनिशां जननयनाद्विशकया॥२८॥

ततो शितांशुकपिहितं सखीमुखं सकज्वलेक्षणयुगलांकितं सुखं ।
कृतं स्वकैः स्मरबरदं रसैरलं कुहूदरं गमितमिवेन्दुमण्डलं ॥२६॥

गजाजिनी भवदशितांशुकोद्भवत् स्मरक्षयेक्षणकुतुका पिनकिवत् ।
बिभीषयत्यतनुमियं नु भस्मना समीभवत्तनु विलसद्विलेपना ॥

अथांजनोद्गतसुहृदंगदान्विता विदूषणाभरतबरात्मसंमता ।
हरेर्वंशोचितगुणिनी महोमयी दधाबियं रघुपतितां दयामयी ॥३१॥

सखीगणो गुणजलधौ महारसः सखीतनाबथ रशनां बबंध सः ।
किमालिकां प्रिय बिजयोत्सुकस्मर-द्रुतागतिं बिरचयितुं कृतत्वरः॥

सुमालिका शितिकुसुमैः सुकल्पिता सखीतनौ स्वपरिजनैः समाहिता ।
मधुव्रताबलि रचितानुरंजिनी मनोभुबो ननु धनुषीब शिंजिनी॥३२

बिभूषणं परिरचयन् तथोचितं सखीतनौ भबति यथा प्रशोभितं ।
निजं निजं बपुरपि संबिभूषितं सखीगणो बिरचितबान् यथोचितम्॥

शिरस्यधान्मदितरसद्विभूषणा-न्युरस्यपि व्यधित तुलापदेऽधुना ।
स्वहीनतामिव कलयन्निमां पुरः चकार किं कलहमतीव नूपुरः ।।३५।।

बहिः कृतं कृतकलहं नु नूपुरं पदात् पराभरणगणेर्षया परं ।
समत्सरः स्वयमयते विबासनं परः परं भवति किलोपलक्षणं ।।३६।।

बिभूषणं परमुरसि व्यधात्त मां पदाच्च मां निरकृततद्विगस्तु मां ।
स्वमाक्षिपत् व्यसृजदितीवजीवनं पदांगदं गतचलनं हतस्वनं ।।३७।।

अन्योन्यं सुमुखीगणै र्निजगदे चित्रे विशाखेऽधुना,
स्थातुं नोचितमत्र चंपकलते सज्जेन्दुलेखेध्वना ।
श्रीराधासखि रंगदेवि ललिते हे तुगंबिद्ये हि ते
कृष्णाकृष्टमना सुदेवि न मनागेषात्र धीरायते ।।३८।।
काचिन्नूपुरमादधौ करयुगे काचिच्च हारं दधौ
मूर्ध्नी कापि दधेऽजनंकुचयुगे कस्तुरिकां चादधौ ।
काचिल्लोचनभूषणं प्रियतया कृष्णाभिसारे द्रुतं
व्यग्रस्वांततया विपर्य्ययतया किं किं कया नो कृतं ।।३९।।

आबामस्तनयातिबामभुजतः कृत्वा विशाखादरं
विन्यस्य प्रियवृत्तवादिललिताहस्तेऽपसव्यं करं ।
रासोल्लासरसं चचाल हरिणा संभावयन्ती स्वयं
मूर्त्तं वास्यमनोविनोदनमना वृन्दावनश्रीरियं ।।४०।।
निचोलं नो काचिन्निपतितमबोधीदवयवा-
द्विमुक्ता मुक्तालीरपि न समयं सीदति जवात् ।
न चैकस्मिन् लाक्षारसमपि पदे काचिदयते
चलन्तीस्ता इत्थं पथि पथि निरंगो विजयते ।।४१।।

रसभरचंचलनेत्रां लघु लघु पुरतो विधाय रसचित्रां।
परिजनसंघति रेनां सपदि पथि चचार चचारगुणां ।।
यं सूते स्म हरेः पदाम्बुजमतिर्ल्लक्ष्म्यग्रनारायणः
श्रीला कृष्णपरा च चम्पकलतानूपाग्रनारायणं ।

काव्ये भक्तिरसोज्वले विरचिते तेनात्र सर्गो बुधा
मोदे षष्ठतया कृतो बुधगणामोदाय भूयादयं ॥४३॥

---

## सप्तम सर्गः

निजतनुद्युतिशांततमः श्रियः प्रियतमाय पथि व्रजदालयः ।
प्रददृशुर्नवपल्लविनीं वनीं समदनामदनानलदीपिनीं ॥१॥

इदमिदं सखि पश्य हि तां सखीं त्विति वनश्रियमैक्षयदुन्मुखीं ।
परिजनो मधुभूषितभूरुहां सुमनसो मनसोन्यसुखदुहां ॥२॥

स्मर वृथा कुरु मा मम वेदना- मिति कयाचन याचनसन्मनाः ।
सखि वृथेति सखीमदनस्थिता निजगदे जगदेक दुरात्मता ॥३॥

अथ मुकुन्दमनामुदितोन्नतं कमपि भावमवेद्य सखी गतं ।
अकथन्मृदु काचन गोपिका सपदि कांचन कांचनमालिका ॥४॥

स्खलति ते वचनं पतितं स्तनात् ननु निचोलमबोधि न संशनात् ।
परिजनेपि हरिप्रणयोन्मदे मयि नतेऽयि नतेऽजनि दृक्स्वदे ॥५॥

अपि न मौक्तिकहारमधः पदे निपतितं सखि वेत्सि पदे पदे ।
ध्रुवमतो दयितप्रियताशरः सरति बो रतिबोधकरः स्मरः ॥६॥

तव सखा सखि यत्र पुरो गतां तदटबीमपि पश्यसि नोन्नतां ।
हरति ते मतिमप्यति संभ्रमो हृदयजोदयजोनधिका भ्रमोः ॥७॥

इति निशम्य कुचावथवाससा व्यवदधेऽवदधे परितो दृशा ।
प्रियसखीं प्रियवाचमुबाच सा सुमधुरं मधुरं जितमानसा ॥८॥

परगतं सखि वेत्सि यथांजनं किमु तथा स्वगतं नहि दूषणं ।
पुलकितांग्ययि वो बिदितास्मितादिति मयातिमयामपि धीरता ॥९॥

इति भवद्विहितः सखि साहसः कृतसविस्मयहासमहारसः ।
अपि चिकीर्षसि यद्विधुमीक्षणात् करवंश चतुरा चतुराननात्॥१०॥

अभिमुखं ननु तं रमणीकलाविदमवेक्ष्य न का चपलावला ।
उदितमेत्यनया बिधुमंजसा कुमुदिनी मुदिनी सखि कुत्र सा ॥११॥

अपि सकृन्मनसा यदि वा दृशा दयितरूपमलोकि यया तु सा ।
हृदि तदन्यसुखं तदन्यता स्म रतितो रतिनोदकनोदिता ॥१२॥

हृदि विवेचय निर्भरमुन्मुखी किमपि दूषणमस्ति न मे सखि ।
प्रसभमेव मनः सगुणाकरः सरति ना रतिनायकसुन्दरः ॥१३॥

दृगतिथौ सति माधवहर्षणे पिकगणैः कृतकूजिततद्वने ।
परिजनैर्जगदे पथि राधिका सूनयना नयनाशविधायिका ॥१४॥

तरलतामयि चेतसि माततामिह कृथाः कथमप्यवधीरताः ।
समय ईदृश एव किमन्यथा सुतनु ते तनुते वितनुर्व्यथाः ॥१५॥

इदमिदं व्यसनं दयितोपि ते प्रति जगाम सखि त्वदनीक्षिते ।
तव बहुन्यपि भाविनि संगमे स समकल्पत कल्पतरूपमे ॥१६॥

तव समागमं हृदि शंकिना निपतने विहितेपि पतत्रिणा ।
सुशयनं कुसुमानि विचित्वता रचयता चयता चलिता लताः ॥१७॥

अपि मुहुर्मुहुराकुलमीक्षिणा त्वदयनं सखि तेन बियोगिना ।
क्षणमपि स्थिरता दयितेन तेन मिलिता मिलिता क्षुदितारतेः ॥१८

त्वमिति तस्य पुरो हसितानने प्रणयिनी रजनीरजलोचने ।
अभिससार मधौ हि सलालसा वरतनूरतनूद्रुतमानसा ॥१९॥

उपचितं सुकृतं फलदायकं सखि ततः परिलोकय नायकं ।
इह वनप्रियसंकुलकानने त्वमधुनामधुना मदनायने ॥२०॥

मधुलिहा मददे मिलिते मधौ नवलता वलता वलताबधौ ।
स्पृहयतिप्रियसंगसुखं न का नु परमे परमे परमे कि का ॥२१॥

इति वचः श्रुति सस्मित वक्त्रया स्वनयनां चल चचंलतारया ।
निजगदे वृषभानुतनूजया द्रुततरं तत रंग तरंगया ॥२२॥

किमपरो मनुजो यदि जायते जिगमिषा ललितांगि गिरांपतेः ।
गणयितुं स गुणं प्रभुरस्य न श्रुतबिलक्षणलक्षणशलिनः ॥२२॥

मम मतौ सखि दूषणमेव तद् गुणगणोपि तत स्तत एव यत् ।
क्षणमपि स्थिरतां न मनः श्रितं नवघनाकृतिना कृतिना हृतं ॥२३॥

मम कृते सखि किंन कृतं त्वया रचितसंवदने वदनेहया ।
इह तदेष्यति मूर्त्तिरहंमते रनवनी नवनीरधरद्युतेः ॥२४॥

मम मनो नमनोत्सुकचित्तभू रभिचार चचार सुगुप्तभूः ।
तनुरनेन निजाशुगसौरिणा विदलितादलितांजनमूर्त्तिना ॥२५॥

मम परं हृदयं विचकार न स्मर इहाघ तदीयसखो पि नः
विकचपुष्पगणः सुरभिः स्वयं स निचकार चकार कुसंज्ञयं ॥२६॥

अयि ततो मयि सुप्रियतातुरः स्वभिससार स सारवतांवरः ।
ज्ञपितयापि सुखं न गेतं मया वसति का सति कामगदेऽभया ॥२७

मम कृते वहु येन पुराकृतं विनयिनानयिना नयिनाशिना
बत स मे नयनान्तिकमस्ति नाखिलसभाजनभाजनकोऽधुना ॥२८

नवनवोद्भवमन्मथयौवने परिगते सखि हे रमणीजने ।
नहि भवेदमृतेऽपि रतिस्तथा किमु न वेदन वेदयिते यथा ॥२९॥

अभिसरामि ततो नवनीरद-द्युतिहरो दयितो हि वशंवदः ।
तमपि वेत्स्यति लोचनखंजनी चिरतरं रतरंगतरंगिणी ॥३०॥

ध्रुवमिदं तदपि स्वमनोरथो वहुकृतैः सुकृतैर्भवतीत्यथो-
अकथमपुण्यवती कलयामि तं सुहृदये हृदये विचिकित्सितं ॥३१॥

इति निशम्य सखीगिरमुत्स्मया निजसखीमन उत्सवदित्सया ।
अकथयच्चतुरा गिरमातमां स्मितमुखी ललिता ललितान्वितां ॥३२॥

सखि वृथा भवतीं समशैत किं चटुकरो ध्रुब एव स तेन किं ।
इह न रंतुमनास्तनसत्तमे हृच रसि को रसिको रसिकोत्तमे ॥३३॥

त्वमिह याबदुरीकृतमच्युतं चलदृशानिपुणनिपुणासितं ।
सखि पुरा भवति ध्रुबमेष कः स हृदयो हृदयोत्सवदायकः ॥३४॥

सुदति यावदमुं परिरंभसे त्वमुरसामुरसा रहरंरसे ।
अतुलमोदमुपैति पुरा वश-स्तव न वे वन वेश्मगतोऽपि सः ॥३५॥
त्वमसि चन्द्रमुखी गुणसत्तमा सखि यदर्थमहोदयमहोदयमा ।
न कथमत्र तवेच्छति दर्शनं सहृदयालु दयालुरनुत्तमं ॥३६॥
अथ सहासमवाचि विशाखया सहसता हसता रसवत्तया ।
सु तनु ते भवितामुररीभृता नव नवा वनवासबिलासिता ॥३७॥
सखि मुहूर्त्त परं मधुसत्तया स्मरमते रमते सपुरा त्वया
हरति का सुरभौ नवयौबना न परमापरमा नवचेतनाः ॥३८॥
वितनुना तनुनायिकया प्रियं करमना रमनायनसत्वया ।
अकृत किं कृतकिंकरबत् श्रमो मुदयितादयिताग्रसरश्रिया ॥३६॥
ध्रुबमसौ त्वदयोगजदुःखसंकरतनूरतनूतनचेष्टना ।
त्वमसि यत् सखि तस्य मनः प्रियं करतनू रतनूतनचेष्टना ॥४०॥
बदसि यत् स किमेष्यति वंशिका स्वनमनो न मनोम्बकबीथिकाः ।
तदधुनैव भविष्यति मा पुनुर्म्मदबशादबशादय तन्मनः ॥४१॥
इति गिरा विपिने स्थिरमानसा हरिमुपेत्य यदा न ददर्श सा ।
प्रियसखीमवदन्न परा इमा मवितथं वितथं च सुहृत्तमाः ॥४२॥

तीव्रं कृष्णवियोगभानुरतपञ्चञ्चन्त्यमी हंसका
ऊटोऽयं कुचनीपकुट्मल इयं दृक्चातकी घूर्णति ।
तस्मात्तामबसाद्विकोपि रसदः श्यामो नवीनस्तव
स्वांतः प्रागंनमंगने घनरसैरल्पावयन्नेष्यति ॥४३॥
श्यामांगव्यतिसंगसत्परिमला आयात्ति वातोच्चयाः
श्यामज्योतिरभिप्लुतं वनमिदं तद्वाससच्छाययया ।
पीतं कुत्रचिदस्य पादकिरणै रक्तं तमालावृतेऽ
रण्येतत् परिहासतत्परमनाः शंके सखा वर्त्तते ॥४४॥

अयि सहचर एष प्रेक्षतो गोपितांगः
परिहसति तमालारण्यरंगप्रसंगः ।

इति तदन्तवादोप्यचर्य्य औत्कंठचहारः
स खलु सुकृतसारो येन साधूपकारः ॥४५॥

निलीनोऽस्मिन् कुंजे परिहसितुकामस्तव सखा
चरणाते स श्यामो ध्रुवमिह समेता स्मितधरः।
अनुज्ञां कुर्वीथा रचयितुमतो वासकविधिं
समायाते कान्ते कमलमुखि कः स्यादवसरः ॥४६॥

इत्युदीर्य्य च वभूवुरथोत्का बासकं रचयितुं स्ववयस्काः।
पंकजादिकुसुमैः शबनीयं कापि निर्म्मितवती कमनीयम् ॥४७॥

वहुविधमधुभाजनं प्रयत्नादभिशयनं तत आनिनाय काचित्।
मधुनि च कुसुमं सुगन्धिहेतुं वहुसुरभिप्रियमोददं न्यधासीत्॥४८॥

कुंजगुंजन्मधुपनिकरं भूषितं लिप्तमंगं
शय्यां पौष्पीं मधु च मधुरं वीक्ष्य गोविन्दसंगम्।
ध्यायं ध्यायं निहितनयना वृत्र्मनि प्रेमपूर्णा
सेयं कृष्णा नुपमवदना नीक्षणा दायघूर्णाः ॥४९॥

यं सूते स्म हरेः पदाम्वुजमतिर्लंदम्यग्रनारायणः
पुत्रं कृष्णपरा च चंपकलतानूपाग्रनारायणम्।
काव्ये भक्तिरसेऽत्र तेन रचिते सर्गोऽतिभव्यो वुधा-
मोदे सप्तम एष पंडितमनो मोदाय भूयादलम् ॥५०॥

---

## अष्टम सर्गः

विरहतां ततां बिप्रलभ्यतां, गुणवतीगणो गुप्तसंस्थतां।
मधुभिदः क्वचोन्मान्यनिश्चितां, कथितवान् कथां कांतसंश्रिताम्॥१

परिजनैर्ननु प्रेक्षिता तनुः, कुतुकिताकृते कुंजनाथ ते।
दयित किं जनादंगगोपनात्, प्रियतमा तु ते प्रेष्ठ पीड्यते ॥२॥

श्रयति यः स्वदं श्रेष्ठ ते पदं, क्वनु स तापभाक् कश्च पापभाक्।
तदलमेतया तान्त खेदया, जयद खेलया जीवनान्तया ॥३॥

तनुरपि क्षणस्त्वामवीक्ष्य नः, सदय कल्पवत्स्वांतहंतृवत्।
कुतुककारकः को मुहुर्मुहुः, प्रियजनं प्रभो पीडयन् वहु ॥४॥

नयनहारिणा न त्वया विना, किमपि चेतना कान्त पश्यति।
सकलमेव नः शून्यति व्यति, क्रममितो विधिः कं करिष्यति ॥५॥

कुलमुपेक्ष्य नः केवलं श्रिता, स्तव पदाम्बुजं तानवान्विताः।
चपल खंजनोत् चंचनत् सरु, स्वनयनांचलस्यातिथीन् कुरु ॥६॥
ललितपद्मणा लोचनालिना, त्वदधरार्पणात् त्राहिणो व्रणात्।
सकरुणस्मितस्वान्ततोषणात् , स्ववचनामृतस्यापि वर्षणात् ॥७॥

ननु तवाननानीक्षणेमुना वितनु भानुना वैक्लवांशुना।
चिरनिपीडनाश्चेटिका मनाक् , त्वदधरांवुना तोषयाधुना ॥८॥

कुचकुलाचले कुंकुमस्थले, त्वरितसिद्धिदं तावकं पदं।
कुरु कृपानिधे कांत सन्निधेः प्रणयवारिधे पाहि दुर्विधेः ॥६॥

कुरु कपोलके कोमलात्मके कमल सुन्दरं कांत ते करम्।
प्रकटितोदय प्रेष्ठ तर्पय, स्वमुखमीक्षय स्वांगमर्पय ॥१०॥

हृदयसारसे ह्यद्यनीरसे,स्मरशरोष्मनः स्वन्तमेव नः।
स्वनखलांछनस्वर्पनोद्यमः, शमय सन्मनः सत्ववर्द्धन ॥११॥

घनरसस्य ते घूर्णितं कृते, दलितमद्य ते दर्शनादृते।
स्वगणमेधिते स्वस्मितामृते, मखय मामृते मुक्तिमाप्यते ॥१२॥

त्वरितमुष्मणस्त्वं निशम्य नः, प्रियतमामिमां प्रीबिकृत् प्रिय।
पुलकिनाधुना प्रेमवल्गुना विततवाहुना वीर पीडय ॥१३॥

त्वदनुरागितां तन्वति स्मरे, मृगदृशामसून्मित्र धक्षति।
त्वयि समर्पितांस्तान्भवान् कृती, करुण दर्शनात् किं न रक्षति ॥१४॥

यदि समेत्य नो जीवनं धनं, परिजनस्थितं प्रेष्ठ रक्षसि।
विरहदस्युना वीर लुंठिते स्वजनजीविते संस्मरिष्यसि ॥१५॥

विरह एष किं वाधते न ते, कुतुकिनो मनोभोस्ततो मयि ।
ज्वलति पीडिते जीवितेऽपि धीः, किमु ततोधिके क्लिश्यति त्वयि ॥

मतिषु योग्यता मादृशां न चे, दपि भवेत् भवदास्यकर्म्मणि ।
सपदि सुष्टुतां शाधि कौशलं वुधगिरा न को वेत्ति शर्म्मणि ॥१७॥

रतिरसेहितां राधिकामितां, प्रवलतापितां प्रेमभाविताम् ।
मृदुविलोक्यतां मुंच धूर्त्ततां कृपय चोजतां कर्कशात्मताम् ॥१८॥

प्रकथयत्यपि प्रेमभाजने, परिजने हरिः प्रैत्ति नो यदा ।
प्रियतमं तमप्रेक्ष्य राधिका, प्रणयजेर्षया प्रावदत्तदा ॥१९॥

पृथुरपि प्रिये प्रार्थना वृथा त्यज ततोऽफलात्यन्तचाटुताः ।
कथममूदृशां कर्कशे विधौ, विरहजव्यथां वेद्मि वाधिताम् ॥२०॥

प्रविदितं मया पक्षपातिता न मयि चक्रिणो नीतियुक्तया ।
पथि स शव्यया पद्मयाथवा, हरिरहो रहो हार्म्यमपक्षया ॥२१॥

सरलयानया शिष्टमत्कया, वत वयस्यया व्यर्थमीहितं ।
किमिह दूषणं क्वाप्यवेक्ष्यतच्चतुर चातुरीचर्य्यया कृतं ॥२२॥

व्यरमिद्धीरया वृद्धयानया, चपल चापलोच्चारचर्च्चनात् ।
भजति सेमुखी भूरि दर्शिनामपि लघिष्ठतामापदां दिनात् ॥२३॥

भुवि तनुस्थितं भूषणादिकं, मम विधूय तन्मां न भूषय ।
तनुसुखप्रदं तल्पमर्थितं, दयित कल्पितं दूरमुन्नय ॥२४॥

मधुपमादिकां मालि कांचनः, सखिवहिस्ततः श्रेयसेङ्गतः ।
कुरु कुरु प्रियोत्कीर्त्तनं च मा, शृणु जहीहि मे सान्त्वनामतः॥२५॥

सखि समुत्किर श्यामसुन्दर,स्मृतिकरान्पुरः श्यामलद्रुमान् ।
द्रुतमिमान् शुकान् दूर-संस्थितान् कुरु हरेर्गुणान्कीर्तितुं क्षमान् ॥

चटुललोचनं चित्तरोचनं, विकसितस्मितं विश्वविस्मितं ।
मधुभिदो मुखं मन्मुखोन्मुखं,निजमुखालये नेतुमर्थये ॥२८॥

सखि बनांतरे श्राम्यतो हरेः कमलसुन्दरे कर्कशे करे ।
कुचशिलोच्चयं कर्त्तुमर्थयं,व्रजधराभिधा नो भवेन्मुधा ॥२९॥

चपलिमाग्रहं चक्रिणोऽन्वहं पदसरोरुहं प्रार्थयाम्यहम् ।
शिब शिब स्वहं सान्तमावहं,कृतहरिस्पृहं किं करोम्यहम् ॥३०॥
बिबिधकत्थनाविक्लवाननां परिजिहासितप्राणभूषणां ।
विधुरयायितां वीक्ष्य वृन्दया,कथयितुं कथां कौशलज्ञया ॥३१॥
निभृतवोधितो नागकेशरं, बिपिनमेतया वृन्दयाच्युतः ।
अभवदुन्मना अन्तरात्मनो,स्वगतमन्तुना शंकितस्ततः ॥३२॥
मधुरवाचया मोदयन्निमां समुदिते सति स्वागसांभरे ।
सपदि योजयन् सोस्य गुप्तये,क्षणमचिन्तयत्तमन्तरे ॥३३॥
चटुलपद्मया चन्द्रपूर्व्विका,वलिवयस्यया वल्गुवाचयात ।
हृतधिया कृतं हन्त किं मया, शमनमागसां स्यात् कयार्च्चया ॥३४॥
वत समागतै र्वीक्ष्य मां नतैः,परिजनैर्व्वनं प्राप्य तप्यते ।
रुषितचेतसा राधिकाद्य सा चरितचापलं चापमंस्यते ॥३५॥
निजसखीं सभानीय तान्तया, हृदि वयस्यया हंन संमतः ।
ननु विशश्वसे नैव बीरया,रुषितमुक्तया राधया ततः ॥३६॥
प्रियतया प्रियां प्रेमवामया,सचकितस्तया सत्तृमुद्यतः ।
चपलचर्य्यया चन्द्रपूर्व्विका,वलिममोदंयत्व्यंगपद्यतः ॥३७॥
कितव त्वमहो न वर्त्तते मम, चन्द्रावलिजात्वयि त्वयि ।
न कदापि मृषोक्तिको भवं न भवाम्यप्यहमित्यतस्त्वयि ॥३८॥
व्यत्यस्तवर्णधारा सुपयोधरा लिरुपैति रससारा ।
कुंजान्तरमुपयाम्यहमवीक्ष्य मां क्षणमसूयमेह ॥३९॥
निशम्य श्रीचन्द्रावलिरथ मुकुन्दस्य वचनं,
विदन्ती सस्मेरा सपदि दयितस्याशयगणं ।
ददौ तस्मै तस्योत्तरममलचेता ह्यपिचले,
रजो वा व्याजो वा शरलललनानां न शरले ॥४०॥
ध्रुवं तेनैवाहं भृशमनुगृहीतास्मि भवता,
सदैवास्यां दास्यां मयि शरलभावं प्रथयता ।

ममास्ते का चिन्ता हृदि वसति कृष्णाङ्घ्रियुगं,
तदालम्ब्याप्यंभोरुहमुख दधे प्राणपतनं ॥४१॥
वाचा तोषितमानसां मधुरया चन्द्रावलिं दक्षिणां
सम्मेरां हरिरेदयकर्त्तु म चलत् गांधर्व्विकासान्त्वनां।
अन्यापि स्वसखीगणैः कृतवती कृष्णस्य निष्कैतव,
प्रेम्ना कीर्त्तनमेव तत्र जगतां शारल्यलक्ष्मीरिव ॥४२॥
अलं मग्नीकुर्व्वन्नसमयपयोधौ व्रजवधूः,
कृताह्वानो नामग्रहणमसकृद्गोकुलविधुः।
ततः श्रीमद्राधां विरहवलदुत्कंठितगिरं,
विधातुं सानन्दां मधुरमकरोद्वैणवरवं ॥४३।
अस्मानत्र समीक्ष्य गुप्तमितया कुंजांतरं धीरया,
सप्रेया ननु वेदितो ननु वसन्नन्यान्तिके वृन्दया।
इत्थं वैणवसुस्वरादनुमितं यावत् व्रजेशानया,
श्रीराधाभिमुखं भुवि प्रविविशे तावत् द्रुतं वृन्दया ॥४४॥
आयातान्तां वृन्दिकां लोकयन्ती,श्रीमद्राधा मन्दमन्दं हसन्ती।
सान्तर्गर्व्वं तीर्य्यगानम्रगंडं,सभ्रुभंगं वक्त्रनंगेन शौडं ॥४५॥
प्रतिपदतूर्णतास्खलितपादमिहाम्यशशः
सचकितमाकुलाक्षमयिलोकयसे वहुशः।
शिथिल निवन्धनां न रसनामपि लोकयसे,
नहि करणीयमीदृशमिहास्ति यथात्वरसे ॥४६॥
तिरश्चीनग्रीवा पुलकिततनुजृंभितमुखी,
सखीवागारंभे धृतकपटमानास्मितमुखी।
धृतान्तर्व्वैवश्या हरिगुणविवक्षुत्वकलनात्
त्तयोचे श्रीराधा सरसमनुरागप्रणयनात् ॥४७॥
ज्ञातं ज्ञातं यदसि दयिते मानिनी हेतुरस्य,
ज्ञातो मंतुर्न्न हि कुतुकिनः क्वापि गुप्तस्य तस्य।
व्याजैः कान्ते परिहसति यो मान आकस्मिकस्ते,

तस्मिन् हेतुं भ्रममिह विना कोनुमाता वत्तास्ते ॥४८॥
आध्मातं हृदयांवुजं पुलकितं सर्व्वांगमास्यं द्रुतं,
जृंभासंकुलमीक्षणं च सफरीचापल्यमध्यापितं।
इत्थं भावमुपागता हरिकथा प्रारिप्सुता-वोधने,
या सा त्वं कथमस्य धास्यसि पुरो मानं हरेरीक्षणे ॥४६॥
अनुन्मीलं नेत्रं हृदयमलसं ते भुजशिरा,
उदंचत्यानन्दादवददवहित्थामियमिरा।
सकृत् श्रृन्वत्यास्ते मधुरमुररीमीदृशदशा
भवन्तस्मादेनं कुरु कपटमानं न मनसा ॥५०॥
सरसमिति सस्मितायां प्रियं वदन्त्यान्तु वृन्दायां।
प्रणयगुरुतया रसाच्च श्रीराधा सा च वाचमित्युवाच ॥५१॥
समक्षं जानीथा न वद मयि दोषं स्थवयितुं,
धृतश्रीमत्कृष्णाक्षरयुगलपक्षं स्थिरयितुं।
न शक्ताहं यस्मादघरिपुपदाम्भोजमधुनः,
प्रलोभादुड्डीनं कथमपि मनोलिं बिजयिनः ॥५२॥
यस्मिन् कर्णमुपागतेऽन्यवचसि क्षिप्रं श्रवो हीनता,
जिह्वा नर्त्तिनि भिन्नवाक्यकथने स्वैरं भवेन्मूकता।
खंजत्वं मनसोऽपि संगिनि भवेत्तस्मिन्नमोघक्रमा,
कृष्णेत्यक्षरयोर्द्वयेऽस्ति कियती शक्तिर्विबुर्नागमाः ॥५३॥
अजनिषत वदन्त्या यावदस्या महीयः,
स्मरशरभरमूर्च्छा पूर्व्वरूपाणि भूयः।
हरिरपि धृतशंकस्तावदालीगणानां
नयनपथमगच्छच्छश्वद्धुत्-कंठितानां ॥५४॥
यं प्रासूत मुकुन्दचिन्तनपरो लक्ष्म्यग्रनारायणः,
श्रीमत्कृष्णपरा च चम्पकलतानूपाग्रनारायणं।
काव्ये तद्रचिते तयोर्व्वरभवे सर्गोष्टमोऽसौ सतां,
कृष्णप्रेमपयोधिमज्जनविधौ भूयात् पटीयान् सदा ॥५५॥

———

## नवमः सर्गः

आलिभावतरलीकृतात्मकः,कायवानिव रसः स नायकः ।
प्रादुरास्त पुरतो मृगीदृशां प्रेममानकुटिलीभवद्दृशां ॥१॥
वामपाणितलशोणकांतिमा,स्तेन विद्रुमरुचिं नयन्तदान् ।
रञ्जयन्नभिमुखस्थविग्रहा,नन्यपाणिकिरणेन वेणुमान् ॥२॥
वेणुगानवडिशेन गोपिका, लोलचित्तशफरीविकर्षणात् ।
कृष्णनाम्नि च निजे यथार्थतां प्रापयन्नशितिमान्यकारणात् ॥३॥
मन्दमन्दमृदुगंडमंडल,क्रान्तिशौंडमकरांककुंडलः ।
चित्तचोरचरचिल्लिचापलः,स्नेह एव जगतां कि मंगलः ॥४॥
वैपरीत्यपदसंस्थितिक्रमः, संस्मृतोऽपि जनतामनोरमः ।
चित्तवृत्तिमपहृत्यसर्व्वतः,कारुवर्य्यविधिनानुनिर्म्मितः ॥५॥
वक्रदृष्टिरतिवक्रभंगिमा, वक्रहासशिखिपुच्छवक्रिमा ।
दर्शयन्नसवशान्नु चारुतां,वक्रभाव इत एव मूर्त्तता ॥६॥
क्वापि मंद्रमथ कुत्रचिद्द्रुतं चञ्चलं क्वचिदचञ्चलं चलन् ।
भूरिभंगिमगमागमक्रमात्खंजनस्य गतिगर्वमर्व्वयन् ॥७॥
(कुलकं)वीक्ष्य कैतववलेन गोपितं,धैर्य्यभूपमिव योषिति स्थितं ।
जेतुकाम उपचक्रमे नवश्चित्तदुर्गदलने मनोभवः ॥८॥
द्वारि मानवलिना ततो मनो, दुर्गमध्यगमनाभिवारिणा ।
युद्धमास्त मदनोपपादिता, धैर्य्यसैनिकवलान्वितात्मना ॥९॥
रक्षितं विविधधैर्य्यसैनिकैः, क्षान्तिचित्तपरिकर्षणादिकैः ।
मानवीरमभिजित्य वर्द्धिता, दीप्तिमाप महतीमधीरता ॥१०॥
नेत्रभंगपुलकादिभिस्ततः, स्वाधिकार उपपादिते नतः ।
मान आस कथमप्यधीरतां, किन्तु संश्रित इमां बलोद्धतां ॥११॥
संगरो हरिगुणस्य नाश्यया, संवभूव सुदृशामसूयया ।
तां विमथ्य हरिणीदृशां मनः, क्षिप्रमेव विविशे हरेर्गुणः ॥१२॥
धैर्य्यभूपमभिमन्थितुं स्मरः, स्त्रीषु यर्हि विससार सत्वरः ।
गंतुमीषुरसवस्तदाश्रिता, धैर्य्यहानिमिव वीक्ष्य लज्जिताः ॥१३॥

आस्यपाणियुगपादयुग्मकैः पञ्चपद्मकुसुमाशुगैः स्वकैः ।
कृष्णदेहरथकात्मभूजिता, गोपिकाहृदि भवर्त्तिधोरता ॥१४॥

अस्थिर्ति दयितरागपादुका, ताडनेन गलहस्तयन्निव ।
धैर्य्यभूपमभिमथ्य तत्क्षणान्मन्मथः स्वयमदूरयत् शिवः ॥१५॥

धैर्य्यभूपदुरवस्थतां स्मरः, संविधाय हरिणीदृशां वरः ।
चित्तकुंजरमवन्धयत् घना,लानपीनमधुसूदनोरुणा ॥१६॥

मन्मथादिरिपवः परस्परोन्मर्ददौस्थ्यमगमंस्तो वधेः ।
धैर्य्यभूपविजयेऽपि षट् ततः, स्वैरिणी हि भवति स्पृहाविधेः ॥१७॥

षट्सु शत्रुषु परस्परार्दने,तान्मुकुंदचरितान्यवन्धयन् ।
नेतरेषु गमने भवन्नलं तेपि शृंखलनिवन्धनंन्वयन् ॥१८॥

मूर्छितो मदनताडनावशः प्राग्वभूव किल यः पुनश्च सः ।
मानआशु वबृधे मृगीदशां जीविते क्व विरितिर्म्महीयसां ॥१९॥

नायके विभिदिरे न मौनितां,तास्ततो मदनपीडिताश्च तां ।
मानिभिर्गुरुततो न मत्यते जीवनं च किमु शर्म्म गण्यते ॥२०॥

मन्दमन्दहसनः सशीतकरः संघशः शिवशिवेति शंगिरः ।
योषितां हृदयमानफूत्करः स्निग्धमेतदवदत् स सुन्दरः ॥२१॥

दूषणं किमपि नैव विद्यते, मादृशां कुतुकिनां भवत् कृते ।
आभिचारमिव मौनमेतदारिप्सथाद्य विफलं कथं तदा ॥२२॥

हर्षभावमपिधाप्य तन्वती, मन्युमेव मृदुतां वितृन्वती ।
गोपिका प्रियतया वशीकृतं तं, जगादललिता तवो मितम् ॥२३॥

एहि धीर भवतो विलोकना,दन्वमायि बहु पुण्यधारणा ।
नेत्रबीथिमधियाति मौस्तमा, दृष्टसंचयभृते महत्तमाः ॥२४॥

ईदृशीः स्मरसि कच्चिदद्य नः, कच्चिदस्ति कुशलं तवाध्वनः ।
खिन्नतामिह समागमातश्रमात् ,कच्चिदद्य न गतोसि संभ्रमात् ॥२५॥

अस्तु तावदिह या तवागतिः, सा व्रजेन्द्रसुतवैन सम्प्रति ।
वेत्थ किन्नु महतां प्रयोजनं, प्राकृतेषु लभते न योजनम् ॥२६॥

ईदृशीं शरलतां विवृन्वती संभ्रमेण नतकन्धरा सती ।
वाचया प्रणतिपूर्व्वया क्रियत् , मानमेव परमन्वमापयत् ॥२७॥
प्रेयसि प्रतिवचो विवक्षया, मन्द मन्द चलिताधरे ह्रिया ।
भ्रू विभंगरुचिरं विशाखया, गद्यत प्रियसखीमतज्ञया ॥२८॥
एहि देव भवते नमो यतः, शम्भुरेवहि भवान्मया मतः ।
भूतिरेव घनसारमिश्रितं, गन्धसारघुसृणं त्वयि श्रितं ॥२९॥
गन्धसारतिलकांतरस्थित,श्चन्द्रकश्च मृगनाभिनिर्म्मितः ।
अन्तरालगतकुंकुमोऽग्निमत् दृश्यते तव तृतीयमक्षि यत् ॥३०
एतदंशुकसमावृतांतर,स्तकर्यसे त्वमधुना दिगम्बरः ।
गण्यते न परकीयमम्बरं भूषणं च परकीयकं नरम् ॥३१॥
जागरादिविविधव्रतोर्ज्जिते,गोंचरोसि सुकृतैरुपार्ज्जितैः ।
तत्प्रसीद निकटं समेहि मा दैवतस्य नहि मतुसीसमा ॥३२॥
इत्युदीर्य्य रसरोषसंभ्रमा, दास्यमाप्तचलनेत्रविक्रिमा ।
मन्दमन्दकुटिलीकृतं कियत, मन्दहासमियमौपनम्रयत् ॥३३॥
अन्तरेऽतिशयहर्षशालिनी, रोषमीषदिव चावलम्बिनी ।
सस्मिता तमथ रूपमञ्जरी, नम्रमौलिमवदत्त्रयागिरि ॥३४॥
दूषणं किमपि नास्ति यत्सतां,मंतुमानिव भवान्न लज्जतां ।
पद्मिनीषु निशि नो मधुव्रतः, स्थातुमिच्छति विधिर्हि तद्व्रतः ॥३५॥
यत्कृता चपलता त्वया द्रुतं, श्यामलस्य तदिदं तवोचितं ।
ख्यातिमानस्थिरतया मधुव्रतः, क्वापि केन चन किंनु विश्रुतः ॥३६
त्वां विना त्यजति याशुजीवनं, तां प्रतीदमुचितं न वंचनं ।
कोऽनुकूलतनुचित्तखिन्नते, संविधाय सुकृती प्रतीयते ॥३७॥
अन्यया हृतमना अपि प्रियः, खेदयेन्न वशवर्त्तिनीः स्त्रियः ।
सेवितोऽपि हि विधुर्व्विशाखया निष्ठुरः कुमुदिनीषु नद्व या ॥३८॥
यत्तवाप मम जीवनेश्वरी,दुःखमद्य विरहादनिश्वरी ।
तत्र किंचिदपि संस्पृणोति यः, सोऽपि नेत्रजानिताश्रु संचयः ॥३९॥

प्रीतिरेव भवता ममेश्वरी, प्राणहानिकरदुःखिताकरी ।
वेद केदमवला वलीयसी, वेदनातिदहना यदीदृशी ॥४०॥
प्राणगुर्व्विसखि जीवनाधिके या जुहाव न ततोन्यथान्तिके ।
जीवनाव्बुर्दगुणाद्य दुःखिनी, रागिनीव वत सा वियोगिनी ॥४१॥
हर्षहास्यमपि सा नतेक्षणा, नम्रयन्मुखमतथ्यमन्युना ।
कैर्न्नमन्पुरभिनीयतेक्षणात्प्राणकोटिगुणवस्तुतक्षणात् ॥४२॥
मानदावदहनद्रुहं रसैः,प्लावनीं जनमनो महीभृतां ।
मञ्जुवागमृतवृष्टिमातनोच्छ्यामलो घनरसप्रदो भ्द्रुतां ॥४३॥
न स्वप्नेपि ममास्ति तावकसखीभिन्नासु वांछोदयत् ,
गाढप्रेमपदे तथापि मयि ते मानाग्नितापोद्य यत् ।
धीरायास्तव दूषणं न तदिदं प्रेमोज्वलायाहिते,
कैश्चित्किंचन पूर्व्वकर्म्मललिते तत्कारणं कल्प्यते ॥४४॥
तवान्यत्वज्ञानं यदजनि मदीयेऽपि वसने,
न ते दोषो धाता भ्रमयति विशाखे सुनयने ।
मदीयान्तश्चोरं वरतनुतनो मोचयति य,
श्चिरादस्माकीनं प्रणयगुणवद्धं हतदयः ॥४५॥
द्वौ राधिकाप्यहमुताकुरुतां पणं स्वं,
तस्यै पुनः प्रतिपणं भवती व्यधात् स्वं ।
हे रूपमंजरि सखि प्रणयैक राशि
स्त्वंकिं विपर्य्ययमिमं मयि संतनोषि ॥४६॥
संसारज्वरजर्ज्जरं करुणया यानूपनारायणं,
कृष्णप्रेममधूनि चम्पकलता प्रारोचयन्मामपि ।
ग्रंथे तत् करुणाकरेण जनिते धीमन्मनोमन्दरं,
सर्गोऽसौ नवमो हरिप्रणयिता दुग्धाब्धिमग्नीक्रियात् ॥४७॥

---

## दशमः सर्गः

सानुरागवचसे दयिताय, माननाशपटुमन्दहसाय ।
वक्तुमुद्यतवतीः सुकुमारी, ता उवाच वृषभानुकिशोरी ॥१॥
मा वृथा वितरथ प्रतिवाक्यं प्रेमशून्यहृदि किंच न शक्यं ।
मानसेन समुदस्यति मौनी,दुःखदो न सुखदो यदमौनी ॥२॥
ईषदुक्तवचनां ललिताया नेत्रभंगशमितां कुशलायाः ।
तामवोचदुचितोक्तिषु धीरा, वृन्दयेङ्गितनियोजितवीरा ॥३॥
इदृशेऽपि दयिते गुणसिन्धौ,नानुरागमयसे यदि बंधौ ।
भर्तृतां विङ्गितवानभिमन्यौ,यो विधिः स उचितो नहि मन्यौ ॥४॥
पूर्वपुरुषवृहत्सुकृतेन, किंकरी कृतमिमं मनुषेन ।
इत्थमीदृशगुणार्णवकान्ते, का विधाय कृतितां वत वृङ्क्ते ॥५॥
चेदनंतगुणवानविदग्धस्त्वन्मतो नु स जगत्रयमुग्धः ।
त्वं च तस्य विरहानलदग्धा, तावतैव सुतरामविदग्धा ॥६॥
मानदग्धमुपपाद्य विदग्धं, पौरुषाणि तनुषे गुणदिग्धं ।
किन्तु तिष्ठति तवोपरि शास्ता,मन्मथस्तदरिता नहि शस्ता ॥७॥
निष्ठुरासि सरसे पदपित्सौ, नायके भुवनभव्यविधित्सौ ।
ईदृगागसि यदि त्वयि कामः, शं तनोति हत एव स वामः ॥८॥
स्वां तनूमतनुपीडनलक्ष्मी, कृत्यकान्तमधिकं यदधाक्षीः ।
सात्विकादिसकलादतिरिक्ता कासि मानमदमोहितचित्ता ॥९॥
तामवोचदनिरस्तविवक्षा,मिंगितेन शमितां सु समीक्षा ।
निःसमाप्तिकगिरां स्थविराणां, कः शृणोति सफलं मुखरानाम् ॥१०॥
इदृशीमचतुरां न जरित्रि मा मनुष्व किमुतेऽस्मिननत्री ।
षेमुषी वरमुपैति युवत्यामुत्तमाधिकतमा हि जरत्याः ॥११॥
अद्य यद्यददादवलायै, दुःखमेष गुणवानमलायै ।
विधुरेतद्रुतजीविततुल्या,रंगिणीप्रभृतयोप्यति मूल्याः ॥१२॥
यद्ययं कुतुककृद्वनचारी, दुःखदो मम तथापि विहारी ।
वाधतेऽस्य हि मदायुषि देहे,कंटकाद्यहमनेन च देहे ॥१३॥

इंगितेन वृषभानुसुताया,लासिकोदितनिगूढकथायाः।
तामुवाच जरतीं गतगर्व्वा, मंजरी मतिमती रतिपूर्व्वा ॥१४॥
यात्तदैव जरठे विधुराया,दुःखराशिकणिकां कलनीया।
स्सर्व्वकार्य्यपटुना विधिना ते, तन्यते तरुणता या चित्ते ॥१५॥
अन्धयत्यपरवस्तुनि दृष्टः, सर्व्वतस्तु तिलमात्रमदृष्टः।
नैष दुष्ट इयतान्यदिदृक्षा, नाशने हि वपुषोऽस्य सुशिक्षा ॥१६॥
नैष दूष्य इयत्तापि मदीशा, चित्तरत्नमहरत्तनुभासा।
नव्यगव्यमतिभव्यमहार्षीत् तर्हि चोरमभिधानमकार्षीत् ॥१७॥
गोपिकागणमनः कणमात्र,ग्राहकेण न महानहरिणात्र।
गृह्यते स्वरसतोऽर्पित आत्मा, कैन्न दूष्यत इतोपि महात्मा ॥१८॥
दुःखिनी सरसमानसहंसी चंचला न हरिहंसहृतासीत्।
किंतु तद्विरहपीडित आत्मा, हंस एष हरिणेव हृतात्मा ॥१९॥
चित्रमत्र नहि मानसहंसी, लंपटेन हरिणापहृतासीत्।
आत्महंसमवधीर्य्य रतत्वं, विस्मयाय वरटा कुलटात्वम् ॥२०॥
नात्म हंस इह मानसहंस्या, स्मर्य्यतेऽपि हृतया हरिवंश्या।
विस्मरेत् क्व परपुरुषरक्ता, भर्तृवेश्मकुलटापि विरक्ता ॥२१॥
कच्चिदस्य गुणरूपपतत्रा खेलताद्रसपयस्यतिचित्रा।
नात्महंसमिह सा यदनैषीद्दूष्यते तदुत मानसहंसी ॥२२॥
ईदृशे ध्रुवमविश्वसनीये,नानुरक्तिरुचिता रमणीये।
स्तूयते क्व कपटे सतिरूपी,सौर्य्यधैर्य्यगुणसंघयुतोऽपि ॥२३॥
केवलं मदसुकोटिगुणायाः, प्रार्थनेन विकृतिः शमनीया।
शक्तिमद्रचयितुं ज्वलितस्य, तोयमेव शमनं ह्यनलस्य ॥२४॥
राधिकामुपमुकुन्दममन्दा, तां मुकुन्दनयनेरितवृन्दा।
मन्दमन्दमवदन्मुदयन्ती काल एव सुधयो हि वदन्ति ॥२५॥
मा पदान्तपतितामवसंस्थामामिमामयि दयामयि सा-दां।
प्राणकृन्तनकरो मम रोगो यो वियोग इतरेतरतो वाम् ॥२६॥

वेदना किमु बुबोधयिषोस्तेऽबोधि तेन निपुणेन शस्ते ।
क्रीतमाधवमनः प्रतिमूल्यं मानवाम्यमथिते सुखतुल्यम् ॥२७॥

मानशान्तिमपि कर्तुमहं का, देवि कृष्णमयि तेऽस्मि वराका ।
किन्तु सा स्वरतिरस्कृतहंस्या बीजनाशमुदपादि सुवंश्या ॥२८॥

त्वन्मयस्त्वयि सदा कृतभाव, एष माधवमयी भवतीव ।
तन्प्रसीद दयिते धृतपाणौ क्वास्ति मान इह वैरिणिवेणौ ॥२९॥

निःफलं कमलविभ्रमयोस्त्वं, धूननं न करयोः कुरु कृत्यं ।
पद्मिनी भ्रमधिया हि पतन्तः स्यु, र्न तेन मधुपा भयवन्तः ॥३०॥

कच्चिदद्य तु भवन्मुखचन्द्रः, स्निग्धहास परमामृतसान्द्रः ।
ल्हादयेत सकलास्तवमाना, दुःस्थदुःखतिमरौघनिमग्नाः ॥३१॥
वृन्दयोदितलघूकृतमानां, तामुवाच मधुरस्मितमेनां ।
मोहयन्निव किशोरवरोऽस्या,इङ्गिताद्रुचितकृत्यविदुष्याः ॥३२॥

जीवनं किल तव क्रयनार्थं,मामकं सखि पणीकृतमर्थं ।
अल्परोषशमनं प्रतिमूल्यं, नो ददाति भवती किमतुल्यम् ॥३३॥
क्रीतजीवनपणं निजवक्षः,स्पर्शमात्रमददानसमीक्ष्य ।
चित्ततस्करतया च मयाद्य, त्वं निबंधुमुचितैव समुद्य ॥३४॥
इत्युदीर्य्य रसिको रसिकायाः, पाणिना पुलकिना दयितायाः ।
दक्षिणेन धृतनीबिरमुस्या, बामतो बटुमवेष्टयदस्याः ॥३५॥
मेखलास्पृशि हरौ गुणराशौ,भीमतीव जरती पुरतोऽसौ ।
अश्रु गर्व्वपुलकस्मितयुक्तं साभ्यसूयमवदन्दुषितातम् ॥३६॥
श्याम हेमरुचये स्पृश मा मा, हेमकान्तिरियतापि भवेन्मा ।
दुर्यशोहि नवनीतहृतेर्यत् , कृष्णतान्तु तनुते विततां तत् ॥३७॥
याहि याहि निकटात्तवसंगे, कालिमा बत समेति ममाङ्गे ।
दर्पणे हि मलिनैर्विदितं वः संगमे व्रजति तत् प्रतिबिम्बः ॥३८॥
हन्त पश्य न किमप्यधिकर्द्धिः,शास्म्यसौ तदपि मां बिरुहण्द्धि ।
नीविमोचकमहेवदवृद्धे ,नो विभेषि किमु राज्ञि बिवृद्धे ॥३९॥

मार्जनेन वपुषोऽथ कवर्य्या, बंधनैश्च कुरु मा परिचर्य्याः ।
साधुतो परमतां मम धूलिः, प्रीतिदैवलुलिता च कचाली ॥४०॥
श्रीमतीमभिकलय्य तु राधां, बामतैकनिपुणामसुसाधां ।
तामुवाच मधुरं सुमुखीभिः, सा विमृष्य ललितादिसखीभिः ॥४१॥
मान एष बिफलः सकलेशे,दूषणं नहि धृतेदृशवेशे ।
किं गिराद्य भवती हरिवेशं,स्वीकरोत्वनुभवार्थमशेषम् ॥४२॥
बद्धपिच्छमुकुटामकरोत्तां, कोशलाथ कृतहूंकृतिमेतां ।
रूपवत्यपि हरिद्वसनाभ्यां, पर्य्यधाययदघारिधृताभ्याम् ॥४३॥
राधिकां मिलितबिस्मयवेशां, श्रीमतीं रतिकलादयइशां ।
कृष्णभूषणगणेन वयस्या, भूषितां विदधिरे सुयशस्याः ॥४४॥
मत्स्वरूपमदधाः सुविनीते,संवृतिस्तदुचिता कुचयोस्ते ।
इत्युदीर्य्य हरिराप्तवयस्या, वेश एष पिदधे कुचमस्याः ॥४५॥
पुरो वृद्धादीनां पिदधति मुकुन्दे कुचबरं,
दरोदंचत्स्मेरं विलसदरुणं शुष्यदधरं ।
तिरो नम्रग्रीवं सजलनयनं सान्द्रपुलकं,
मुखं श्रीराधाया हरिमुदमतानीत्समधिकम् ॥४६॥
यातैवासि प्रियसदृशतां सर्व्वथा किंचिदूनं,
वैलक्षण्यं यदपनय तत् त्वन्मयस्या स्य मानं ।
प्रीत्या दूरं सखि स इव ते चाटुभिस्त्वं चिकिर्षुं,
भूं त्वेत्फक्का बहुलहसितामालयस्तामकार्षुः ॥४७॥
अयि सुतनु मद्वेशे राधे तव स्तनपर्व्वतौ,
प्रियसखि भवद्वेशे युक्तौ मयीति निगद्यतौ ।
उरसि दधति स्वीये कृष्णे स्फुरत्पुलकोत्सुका,
सपदि बिगलन्माना श्रीला विराजति राधिका ॥४८॥
आलीभिः पदनतिसीममानमस्या,
गोविन्दे समयति कौशलाद्विदुष्याः ।

दृष्ट्वैनामिह हरिणा मुदा हसंती,
मालीनां जयजय निःस्वना जयन्ति ॥४६॥
संसार इत्यादि पूर्व्ववत् ।
काव्ये तत् करुणाकरेण जनिते धीमन्मनोमन्दरं,
सर्गोऽसौ दशमो हरिप्रणयिता दुग्धाब्धिमग्नं क्रियात् ॥५०॥

## एकादश सर्गः

गमिते निजबेशमच्युते, सह गांधर्विकया रसालुप्ते ।
उभयोः कमनीयतामुभावपि, बीदयागमतां मुदः शुभाः ॥१॥
प्रणयस्मितसंकुचद्धनु,र्दयितायाः पुलकांचिता तनुः ।
रसचंचलदर्शिनामुना, हरिणा वर्ण्यत भावशालिना ॥२॥
मदनो भ्रमरालिशिञ्जिनीं, किमु वेणीं चरणान्तलम्बिनीं ।
समपूरि शिरीशमञ्जुले तव देहे निजकाम्मुर्कस्थले ॥३॥
यजते नु जिगीषया स्मर,स्तव भालेऽस्ति तदग्निरुद्धुरः ।
नवकुंकुमरेखिकाशखः, सखि सिन्दूरजबिन्दुरुखः ॥४॥
रदनच्छदवंधुजीवकाननपद्मं तिलपुष्पनाशिका ।
नयनद्वयमुत्पले विधिः, स्मरगणांस्त्वयि पंच किं दधिः ॥५॥
दिवसे दिवसेऽधिवर्द्धितस्तुलनां ते वदनस्य सर्व्वतः ।
विधुरिच्छति गर्व्वतो यतः, क्षयितामेति दिनेदिनेततः ॥६॥
विधुरेष ममातितापदस्तव वक्त्राम्बुजदूरवर्त्तनात् ।
अधुना भयभागिव स्वयं सचिवत्वंबलते तवाननात् ॥७॥
विधुना यदहारि लोभिना स्मितशोभाकणिका मुखस्य ते ।
इति भीतिः स कालिमाधुना सकलंकी सकलैर्व्विगीयते ॥८॥
प्रतिसायमुपेतसागरः, श्रितकाषायवरप्रभाम्बरः ।
प्रथमाश्रमभाक् किमब्जक,स्तव वक्त्रद्युतिलेशभिक्षुकः ॥९॥
अभिलस्य तुलां मुखस्य ते, लसदिन्दीवरचक्षुषो द्युतेः ।
विधुरंजनमादधौ घनां, स ततोङ्की किमगाद्विडम्बनाम् ॥१०॥

सखि सारदपूर्णचन्द्रमा,स्तव वक्त्रद्यु तिलेशमृच्छति ।
परिहासविडम्बिनी भवेत् स्तुतिरत्युक्तितया विधोग्गिति ॥११
प्रतिमासमवाप्तुमिच्छया, तब वक्त्रद्यु तिलेशवेतनं ।
कुरुते किमु पूर्ण इन्दुकः, परिचर्य्यां प्रसरन्दिनन्दिनम ॥१२॥
यदि मासि दिनैकम स्थितेः, समुखस्य द्यु तिवेतनायते ।
स्पृहयेन्न समं सुकर्मका, भृतका एवहि वेतनाधिकाः ॥१३॥
तपति ह्यभिभूयते सुखादरविन्दं निशि मुद्रितं मुखात ।
स्वमशक्तमवीक्ष्य तज्जये विगताद्यन्त सदात्मलब्धये ॥१४॥
तव नेत्रजितेक्षणेच्छया, शरणार्थं समुपेयुषो भिया ।
हरिणस्य हि रक्षणेच्छया. द्विजराजो, भ्रमति द्रुतं ह्रिया ॥१५॥
रदनच्छदरूपमुत्सके, नहि विम्बे न च वन्धुजीवके ।
अधरं तदपि द्विजा जनाः, कलयंते वत सर्व्वचर्व्वणाः ॥१६॥
अमृतं तु तवौष्ठवन्धुना, यदि पाय्येत पिपासितोमुना ।
अधरो मम बन्धुजीवकं, यदमभ्येति तदैव योगिकम् ॥१७॥
मुखपूर्णबिधूदये स्म ते, कुचपद्मं किमु कोरकायते ।
मम मुग्धमनोलिरित्यतः, सृतपूर्व्वो न पुनर्विनिः सृतः ॥१८॥
हृदि हेमगिरिस्थिताविमाव वलायास्तव विस्मयावधौ ।
सखि यत्र मनोहरात्मभूभवनत्वं कुचपत्रिका दधौ ॥१९॥
नवयौवननिर्म्मलाहनि,स्तनचक्रद्वयमद्य सुस्तनि ।
मुखपद्मबिकाशसादरं तव योगं लभते परस्परम ॥२०॥
अयि चक्रयुगे तपः कियत् तव सद्वृत्तकुचत्वमाप यत् ।
स्थिरयत्यपि कामभास्करं, त्वयि योगाय निजस्थले चिरम् ॥२१॥
त्वयि कान्तिझरप्रमज्जिनः, सरसि क्रीडदनङ्गहस्तिनः ।
किमु कुम्भयुगं कुचद्वयं तव जागर्त्ति परंदरोदयम् ॥२२॥
कनकाचलकान्तिलुंठनौपयिकौ यौ भवतः स्म ते स्तनौ ।
स्ववशीकृतमादृशां मनः कण,लुंठे तु तयोः कियान क्षणः ॥२३॥

त्रिजगत्त्रिभिराशुगैः स्मरः, सखि जित्वा मम दृग्जयत्वरः ।
स्वरथे किमरक्षयत स्वयं, त्वयि शस्त्रं कुचपर्व्वतद्वयम् ॥२४॥
शरणार्थमुपेयुषोर्नव,स्तनमंतर्जितकुम्भयोस्तव ।
सखि रक्षणकांक्षयासुरद्विष इन्द्रं समुपैति सत्वरः ॥२५॥
विजिते भुवनत्रये क्षणात् मदनः कार्य्यसमाप्तिदर्शनात् ।
किमघो मुखमर्द्दलौ स्तनौ त्वयि संस्थापयति स्म मत्क्षणौ ॥२६॥
रचयन्नखिलेन मेधसा कुचयुग्मं विपुलं विधिर्नगात् ।
उचितं सखि पूर्व्वविस्मृतोदर-निर्म्माणदरिद्रतामगात् ॥२७॥
कति संति न पद्मपल्लवान्यपि किन्तेन लवोपि तादृशां ।
क्वचिदङ्घ्रिविनिन्दितश्रियां किमुतास्ते तव पाणिरोचिषाम् ॥२८॥
विहतोदरचारुतामदस्तव तन्वङ्गि कृशोदरश्रिया ।
सभयः परिभूय केशरी जगदम्बां किमुपाश्रितो ह्रिया ॥२९॥
अयि चक्रधरं रसातले वलिरेको ह्यनयन्निजस्थले ।
न विचित्रमवंधि मे मनो यदचक्रं वलिभिस्त्रिभिस्तनोः ॥३०॥
न विहातुमलं तवोदरं परमाणूदरिमन्मनोदरं ।
सुहृदोरमहत् स्वरूपयो,र्म्महतोर्वाह्यधिकारतिद्वयोः । ३१॥
विजने तव नाभिपल्वले, समुपेतामवलोक्य निर्म्मले ।
पुनरास्त्रशदात्मभूः क्षणात् , मम चेतो हरिणीं त्वदीक्षणात् ॥३२॥
तव तुन्दविनिर्म्मितोत्थितां,गतवान् यः सखि सर्व्वशून्यतां ।
पृथुलात्पृथुलं कथं विधि,र्जघनं तेऽकृत शिल्पसेवधिः ॥३३॥
किमुतोरुरुचो ह्रिया हता,तरुरंभा तपसा दिवं गता ।
अभवत्तरुणी तथापि सा,परिभूतैव तवोरुरोचिषा ॥३४॥
हरतस्तव देवमानसान्यपि लाक्षारसरंजितौ पदौ ।
इह यत्तनुरेणुकैतवाद्गिरिशादिर्मनसे स्थितिं ददौ ॥३५॥
तपति स्म कुशेशयं हि ते पदसौन्दर्य्यमुपैतुमुल्लसत् ।
तुहिनेषु विसृज्य जीवनं रुचिरामाप गतिं तदेव सत् ॥३६॥

सततं हृदयाम्बुजं भजेत्, न तिलं ते पदपंकजं त्यजेत् ।
प्रियतामधिकां परस्परं, क्व न जात्या समतातनोत्परम् ॥३७॥
सुकृतं विदधे बिधुः कियत्प्रतिसायं जलपूरमाप्नुवन् ।
परमं यदवाप ते पदं स निरंको नखरात्मको भवन् ॥३८॥
सपदि दयिता रूपांभोधौ हरेः प्रियतायुजः,
स्मररबिसमुत्तप्तो मज्जन्मुदान्धमनो गजः ।
भवतु बिगलत्तापो युक्तं ततः पुनरुत्थितः,
स नयदभवद्भूयादेवं सदैव सुदैवतः ॥३९॥
करेण सव्येन प्रियभुजमतोन्येन मृदुना,
निचोलं बिभ्राणा स्मितविकसितप्रेमगहना ।
तरंगैरंगानां हरिसुखमयानंगसुरते,
रतेयं श्रीराधा रससरिदगाधा विजयते ॥४०॥
श्रीला कृष्णकथामृतं करुणया लक्ष्म्यग्रनारायणा-
पत्यं पाययति स्म चम्पकलता यानूपनारायणं ।
ग्रन्थे तत्करुणाकणेन जनिते सर्गोऽयमेकादशः,
श्यामप्रेमसुधासमुद्रबसतिं धीमन्मनोद्रिं क्रियात् ॥४१॥

## द्वादश सर्गः

श्रीयुतयोरथयन्मधुराधा,माधवयोरवलोकमबाधाः ।
स्वादुतरं पपुरुन्निमिषादयः, सख्य इदं किमु बत्तति दत्तः ॥१॥
सद्वचनामृततर्पितचित्तं, तं ललिता स्थिरमश्वजतात्तं ।
माधवमाहितमंजुलहावं, प्रेमसमुद्गतसात्विकभावम् ॥२॥
त्वं जय माधबमोदनदत्ता,सीति कथामृततोषितसख्याः ।
पादमगादथ कापि सुशिक्षा, प्रेमजडीकृतसस्मितमुख्याः ॥३॥
श्लिष्यति काचन चुम्बति काचित्तावथ सादरमाह च काचित ।
पश्यति सस्मितबिस्मितमेका, स्वीयमनोरथमाप न का का ॥४॥

मुह्यति काचन सज्जनमान्या, चंचललोचनमास तथान्या।
तन्मिथुनेक्षणमुग्धसखीनां, किं न महोजनि भाववतीनाम् ॥५॥
नर्म्ममहोत्सवनर्त्तनगानैः, श्यामसुखाकरसुस्वरतानैः ।
रासकुतूहलमद्भुतमास, प्रेममयो रस उद्विललास ॥६॥
रासरता अथ तावभितस्ताः, सुष्ठु परस्परमर्पितहस्ताः ।
नर्त्तननूपुरगुंजनगीतैः, स्तेनुरनाबिलमोदमधीतैः ॥७॥
आभुवनत्रयमानसरंजं, प्रत्तमुहुर्न्नतिनिर्जितभंभं ।
ता जगृहुर्हरिनूपुरशिञ्जं, झुंझुन झुंझुन झुं झुंन झुंझुम् ॥८॥
अंबुधरस्य च खे गतिहारि, स्वर्जनमानसविस्मयकारि ।
ग्रामचमत्कृतमूर्छनमासां, गानमपूपुरदाविबुधाशाम् ॥९॥
नृत्यति काचन काचन गीतं, गायति सुस्वररागपरीतं ।
मंजुमृदंगकनिस्वनस्तिकं, तान्धिगतांधिगतान्धिगधित्तम् ॥१०॥
श्रृंगमनोहरगुञ्जमतंन्द्रा, मंजुलतम्बुरयन्त्रमर्वच्या ।
बादयते कल चंचलतंत्र्या, काचन गायति मंजुविपंच्या ॥११॥
कंकन-चंचन-झंझनगाना, च्छादितदिग्गणकृष्णसखीनां ।
ब्रह्मसुखामृतमास रतानां, रास-महोत्सवहासमुखीनाम् ॥१२॥
स्वीयकुतूहलमिश्रितहासं, राधिकया सह माधवरासं ।
वीक्ष्य न काऽकृत भूय्युपहासं, ब्रह्मसुखामृतसंततवासम् ॥१३॥
कुंजवने व्यतिखेलितदिग्धा, रासमहोत्सवमोदबिदग्धा ।
बोधयति स्तुतसुस्मितदुग्धा, कांचन कांचन किंचन मुग्धा ॥१४॥
हे सखि हे सखि काममशेषा, जन्म सहस्रजपुण्यबिशेषात् ।
श्रीयुतयोरुत पश्यत राधामाधवयोरिह रासमबाधाः ॥१५॥
औचितमित्यपि यत्सखि जाड्यं, मन्मथमोहनमेलनमेत्य ।
किन्तु कथंचन किंच न धैर्य्यं, धारय मोदजमोहमनेत्य ॥१६॥
आलि मनोभवभावबिबिक्तानन्दजलोचननिर्भरसिक्ता ।
उक्त मनोहरगद्गदयुक्ता, श्लिष्यति तुष्यति तां प्रति रक्ता ॥१७॥

द्वे अयिते अधिमुत्परिरंभं, प्राप्य परस्परमुत्कुचकुम्भं ।
ऐक्यमिवेयतुरुत्सुकचित्ते, रासरसक्षणविक्षणवित्ते ॥१८॥
हे रसमंजरि कार्य्यविदग्धे, हेरतिमंजरि सन्मददिग्धे ।
हे मणिमंजरि सेवनमुग्धे, हेमतनूरिति प्रेमनु डुग्धे ॥१९॥
वीक्ष्य परस्परहृद्गतभावं, ता अतिविस्मयमेत्य सहावं ।
श्रीयुतनर्त्तनमन्थरराधा,श्यामपदान्तिकमापुरवाधाः॥२०॥
प्रेमपरिप्लुतचित्तहृदेन, राधिकया व्रजराजसुतेन ।
हृष्टतनूरुहहृद्यमुभाभ्यां, वक्षसि ताः परिरेभिर आभ्याम् ॥२१॥
तत्परिरंभनतोषपयधौ, कश्मलकर्द्दमभग्नमधीरः ।
आलिमनोगजमुद्धरति स्म प्रेममयो हरिकौतुकवीरः ॥२२॥
आलिगणैरथ तद्गुणगानानन्दसुधामयवारिधिमग्नैः ।
कार्य्यमबोधि न किंचन भूयो भूय उपाभृतमोहविलग्नैः ॥२३॥
कृष्णसुखप्रदनर्म्मविलास, व्यंजितमानसमंजुलभावा ।
कांचन तज्जननर्त्तनमन्या, दर्शयति स्मितदर्शितहावा ॥२४॥
माधवमानसमादनगात्रा, चंचलखंजनगंजननेत्रा ।
लोकय नृत्यति नन्दिचरित्रा, केशवसंगममेत्य बिचित्रा ॥२५॥
खेलति फल्गुभिरत्र कृतज्ञे, राधिकया सह रासरसज्ञे ।
अद्य स मन्मथसन्मथकान्ताधिग्धिगिमामनुतं यदि शान्ता ॥२६॥
कृष्णपदाम्बुजभाववतः स्यात्, दास्य-नुतिः प्रति जन्म ममास्यात् ।
मास्तु हरिस्मृतिशून्यजनानां संगरसोन्नतिरंगसमानाम् ॥२७॥
यस्य सती रसकर्षितजिह्वा, संततसेबितकृष्णगुणाह्वा ।
जन्मनि जन्मनि तत्पददास्यं, भाग्यभरादभिलास्यमवश्यम् ॥२८॥
यस्य मतिर्न्नटसुन्दरवेशे, नैव रता गुणवश्यमहेशे ।
ज्ञानरतो ननु योगरतो बा, वेत्ति न किंचन कर्म्मरतो वा ॥२९॥
यस्य मनोगुण-रूपयशोभि,श्चोरति नो नवनीतहृदेभिः ।
सावहितं नहि बच्मि बिचारात्तं सुधियं वत नौमि च दूरात् ॥३०॥

या न भवेत् परपुरुषलोभा, नास्ति कदाचन तत्पुरशोभा ।
वेदनया परपूरुषसौख्यं, प्रातरुपेत्य न तन्मुखमीक्षम् ॥३१॥
अद्य पराजित आलिकि मामः, क्रीडति शार्ङ्गिनि जेष्यति कामः ।
अस्थिरतां तमु वीक्ष्य जगाम, स्वीयशरैः स्वयमेव ननाम ॥३२॥
आलि मुखादिति साधु निपीय,श्यामगुणं हृदि तामुपनीय ।
सम्मदमानसमेत्य विशाखा, कुंजगृहे चलसत्करशाखा ॥३३॥
ताः परितः परिसर्पनकारी, नृत्यति सप्रियरासबिहारी ।
फल्गुभिरालिषु खेलनशाली, ताभिरदीयत सत्करताली ॥३४॥
प्रेमभरात् परमस्य बयस्या, रासरसस्मितसद्धरिबस्याः ।
मन्मथनाशकमानसहर्त्तुः, स्वान्तमगृन्हत ता गिरिधर्त्तुः ॥३५॥
रासपरिश्रमघर्म्मपयोभिः, संप्लुततद्वयगण्डयुगस्य ।
मार्जनपूर्व्वकमालिरखेलत्, पुष्पमृधव्यपदे समुपास्य ॥३६॥
स्वीयतनू परिभूरिशिरीषं, बर्षति सर्व्वत आलि समूहे ।
ईशदुदंचित लोचन आसां, सस्पृहतामथ सप्रिय ऊहे ॥३७॥
सर्व्वदिगुत्सृतगंधतुलस्या, मालिकया हरिरावृत कण्ठः ।
आलिकया परमालिकयस्याः, कंठमगुंठयदुद्गतकंठः ॥३८॥
पुष्पबिसर्ज्जननर्म्मसमाजस्मेररसादिभिरादधदोजः ।
आलिगणैरथ तैरतिराजः पर्य्यतस्तर्पितः तत्र मनोजः ॥३९॥
नन्दसुतसंगसुखमत्ततमयौवतं,
वेद नहि बास्तुगतबस्तुरसयन्त्रितं ।
तापहरकृत्णपदकरिरुहमीयुषी,
तुच्छसुखबस्तु नहि शीलयति षेमुखी ॥४०॥
वीक्ष्य निजपार्श्वगतमम्बुरुहलोचनं,
रासरसहासभरचित्तकृतरोचनं ।
कृष्णसुखनर्म्ममयहासरसपोषिका,
का न निजमिष्टसुखमाप खलु गोपिका ॥४१॥

श्रीला कृष्णकथामृतं करुणया लक्ष्म्यप्रनारायणा-
पत्यं पायपति स्म चम्पकलता यानूपनारायणं।
ग्रन्थे तत्करुणाकणेन जनिते धीमन्मनो मन्दरं,
श्यामप्रेमसुधासमुद्रबसतिं सर्गः क्रियात् द्वादशः ।४२॥

## त्रयोदश सर्गः

कर्णानन्ददवाक्ययोस्त्रिजगती दृक्तोषकृद्रूपयोः,
पूर्णेन्दुद्युतिशीतलावयवयोः पीयूषरस्योष्ठयोः ।
घ्राणानन्ददगंधयोरहरतां प्रेम्नैकतापन्नयो,
रन्योन्यं बपुषी हृषीकमनयोः श्रीराधिकाकृष्णयोः ॥१॥
प्रारिप्सुर्म्मदनोत्सवं दयितया श्रीराधया माधवः,
शय्यां पुष्पमयीं प्रबिश्य परमप्रेमालिदत्तोत्सवः ।
आनीतामुपतल्पमल्पितसुधासारांशकादम्बरीं,
बारम्बारमपात्तया रसधरीमानन्दलीलाकरीम् ॥२॥
आशक्तस्य हरेर्जहार रसनां नेत्रे च माध्वीसुधा,
स्वादुः स्वर्णसमानवर्णवनितावक्त्रेण पीता द्विधा ।
रागादप्यथ पीतपंकजमुखी पीयूषरस्याधर,
स्तस्याकर्षितकंधरस्य पुलकव्याप्तस्य चेतो हरत ॥३॥
माभूदद्य वरांगि कञ्चुलिकया बिश्लिष्टभावोऽपि ना,
वित्युक्ता स्पृशति प्रिये प्रियतमा बीटीं छलात् सन्मनाः ।
सोत्प्रासं प्रियतल्पसंस्थितसखीदृक्चातुरीदशना-
दंतर्धानमुवाह काचन चिरादन्तः सुखस्पर्शना ॥४॥
संश्लेषैरनुचुम्बनैरनुनखोल्लेखैरलं भाषणै,
श्चक्रे मन्मथ उत्सवं हृदि तयोरात्माधिकारे चिरं ।
आनन्दं स्वयमाततान रभसाल्लोकेन मुग्धात्मना,
मालीनामपि चामरैः प्रियतया संसेबिनीनां वरम् ॥५॥

आलीसद्वचने सरोजशयने वृन्दावनेशानया,
क्रीड़ाकौतुकहास-भाषण-रसप्रस्तावनाराधया ।
कृत्वा प्रेमसुधासमुद्रलहरीलोलं सखीनां मनः
मद्योरं जयितुं तदैच्छि हरिणा द्यूतादिखेलागणः ॥६॥
(द्यूतं)विशाखा राधांशे सहचरविभागेऽथ ललिता,
सुदेवीचित्राद्या व्रजरमणपक्षत्वनियताः ।
सखीपक्षा अन्याः पणमकृषताज्ञा कृतिमिति,
व्यवस्थायामक्षान् क्षिपति हरिरंतश्च हसति ॥७॥
त्वदीयाज्ञाकारी सततमहमद्यास्मि सरसां,
विजित्य स्वीयां त्वां रचयितुमुपेतामदवसां ।
प्रियेणेत्युक्तेऽक्षान् क्षिपति हसति प्राह च जितं,
मया सैनं बन्धुं कथयति विशाखां बशगतम् ॥८॥
बिशाखे सख्योक्तं किमु न मनुसे वाहुलतिका,
गुणान्मां बन्धीथा न कथमिति कांतोक्तिरसिका ।
कुचापीडं कान्तं सपदि परिरभ्याभ्युपगता
वयस्यांके मुग्धा मुदयति मुकुन्देन मिलिता ॥९॥
खेलाक्षैः सखि मास्तु किं वद जयस्तत्राक्ष वश्यायते,
लुक्काखेलनमस्तु यत्र धृतदृक् चौरः स्वमन्योन्हुते ।
इत्युक्त्वालिभिरुद्यते हरिरभूत्तत्रापि चौरः पुरा,
दृष्ट्वा तं पिहितेक्षणं ललितया सुप्ता बभूवुः पराः ॥१०॥
ख्यातिस्ते नवनीततस्करतया जाता पुरैवैतया
खिन्नस्तद्भवचौरमेति गदिते तुंगाद्यया विद्यया ।
चौरोऽयं सखि चौर इत्यभिमतं मंजुस्मितं तं तत,
स्ता उक्त्वा करतालिका विदधिरे गोप्यो हसन्त्योभितः ॥११॥
चौरेण व्रजसुन्दरेण सखि यत् स्पृष्टासि चोरसि तत्,
युक्त कर्म्म कुरुष्व किं वयपे सस्मेरमित्युक्तया ।

श्यामा मुद्रितलोचना ललितया स्वं निन्हुवानं हरिं,
लोलापांगविलोकिनी निगदिता धूर्त्ते किमेतत्तया ॥१२॥
अत्रास्ते सखि वंजुलादिलतिकाकुंजे क्वचित् केशरी,
यत्कुंतत्कुचकुम्भगोपनमिति ज्ञात्वोचितं चर्य्यतां।
इत्युक्ता पुलकान्विता ललितया तद्वैपरीत्यंगता,
साथ स्मरेमुखी सखी किमिति तां प्रोचे ह्रिया कुंचिताम् ॥१३॥
किं मामेव सुलोचने निजसखीसंघं विलंघ्यान्तरे,
स्पृष्टुं चौरि सचेष्टितेनि निकटे साकर्ण्य वाचं हरेः।
तं चौरेति ववंध बाहुलतयाथान्योन्यमालिंगितौ,
संश्लेषोत्पुलकौ सखीभिरभितः सस्मेरमालोकितौ ॥१४॥
श्रीकृष्णाक्षिणि मुद्रिते ललितया स्वं निन्हुवाने सखी,
संघेऽपांगतरंगरंगमथ तं व्यज्ञापयत् सा सखी।
श्रीराधातनुसंगरंगहृदयं कुंजं ययौ केशरं,
तं दृष्ट्वा चपला पलायनपरा स्मेराधरा साप्यरम् ॥१५॥
धुनाना नीपानां किशलयकुलं कुञ्जनयना,-
दधाना रोमांचं रसभरदरोदंचिजघना।
निलीना कुंजांते हिततममियं हारिहसना,
ततानानन्दांभोनिधिनिलयमेनांकवदना ॥१६॥
वामं दक्षिणतः करेण हसतः स्कन्धं दधाना हरे,
र्बिभ्राणा परिधूयमानकमलं बामेन कुञ्जान्तरे।
आयान्ती मदमन्थरा मृदुमृदु स्वोक्त्या सखीसंहति,
प्रेमानन्दसुधारसाम्बुधिमसौ मंजुस्मिता मन्थति ॥१७॥
असव्यकक्षांतरवेणुना हरिं, करेण सख्या धृतदक्षिणस्तनं।
विलोक्य वामेन धृता परस्तनं, सखीभिरूचेऽवटुवेष्टिता सखी ॥१८
ध्यातं ब्रह्मपदं कृतं बहुतपो योगादिसंराधनं,
ज्ञातं यैरखिलं कुरंगनयने ते चातुरीसाधनम्।

ज्ञातं कृष्णभुजंगसंगविहितारंभे महान्तोऽपि ते,
नालं किं पुनरीदृशस्तव वयं रङ्ग कुरंगेक्षिते ॥१६॥
मन्थंत्या रसमाधुरीं रसधरं श्यामं पिवंत्यञ्जसा,
सानन्दासि भुजंगभोगिनि न तन्मन्ये बिचित्रं दृशा।
किन्तु श्यामभुजंगदंशनमिदं यत्ते कपोले स्थितं,
लोकिन्या मम चेतसीति सखि हे जातं महद्विस्मितम् ॥२०॥
विधत्ते ते दासीं सखि बिपिनसम्राडिह न का,
मनंगोऽयं तेऽद्य प्रणयभरदृग्भंगजनितः।
यदभ्येतुं कृष्ण प्रणयमधुना ते चरणयोः,
सपर्य्या पर्य्यायः स्मरमथितरत्यापि रचितः ॥२१॥

हसंतीनां वाचा विविधपरिहासं रचितया,
हसंतौ तौ चञ्चन्नयनमखिलानां प्रियतया।
ततोन्योन्यं हस्तौ भुजशिरसि बिन्यस्य बितत,
श्रियौ राधाकृष्णौ सकलसुखराशीव जयतः ॥२२॥

श्रीमान् कुंजबने सरोजसयने कृष्णो निविष्टस्ततः,
प्रोद्घूर्णन्नयनो मनोभवसुखादालस्यजृंभान्वितः।
आनन्दादथ मन्दमन्दहसना सख्या हसंत्या अलं,
श्रीराधाप्यवलंवते स्म बिमला भूषेव वक्षः स्थलम् ॥२३॥

दृष्ट्वा कान्तं कमलशयने मुद्रिताक्षं निषन्नं,
सांतर्हासं परिजनगणैर्वारिता रंगखिन्नं।
आहूयागात् प्रिसहचरीन्नेत्रभंगीं ललामा,
कंसारातेर्म्मधुरमुरलीमुत्तमा हर्त्तुकामा ॥२४॥
अंगीकृत्य बिडम्बिनीमथ तनुं खर्वां वलिध्वंसिनो
मन्दं मन्दमयेन नूपुररवं यान्ती हसन्ती तनोः।
पश्चात् कृत्यसखीगणं मुररिपोरंकस्थवंशीं स्फुरन्,
नेत्रान्यस्तकरा निरुद्धवलयध्वाना सुखेनाहरत् ॥२५॥

आह्वतया वंशिकया दत्तमदां स्मेररदां ।
गूढतरानंदभरामालिगणस्तामभनत् ॥२६॥
मनो नयनमित्युभे सरलवंशजाप्युत्सुके,
विधाय गुरुसन्निधौ वदति राधिके राधिके ।
मुकुन्दमुखचुम्बिनी प्रचुरगर्विणी वासया,
ह्वतादद्य मुरली हरेः सुमति सापि कच्चित्त्वया ॥२७॥
इति प्रियसखीगणे गदति सस्मिते शब्दितां,
ह्वतामखिलसेवितां मुरलिकां निजांकस्थितां ।
समर्प्य वृषभानुजानियतमाश्रवां कांचन,
व्यवक्त यदनुन्मना लघुकरेण कस्मिंश्चन ॥२८॥
ततः समुत्थाय मदस्मितोन्मुखीं,
पुरो बिलोक्य स्मितशोभितः सखीं ।
न किंचिदूचे दयितश्चलेक्षितां,
न जातु गांभीर्य्य-मपैति धीमताम् ॥२९॥
अथ चतुरा रसवापी शक्ता किंचन न गोपितुं गोपी ।
बदति हि बामाक्षीषु स्वांगतरंगितमंतः स्त्रिषु ॥३०॥
परितोषं परिहसंतं परिजनवृन्दं दृशैव बिहसंतं ।
कथमपि सान्त्वयमाना श्रीराधोचे प्रेगुणिमणिना ॥३१॥
कथं मन्दं मन्दं हससि चलसि स्तौति च सखीः,
कथं किंबा सख्या लपसि सखि कर्णान्तिकमुखी ।
न जाने ते चेतो यदिति न ममैता चतुरता,
चरित्रं निर्णेतुं सुदृशि हि गुरोरपटुता ॥३२॥
इति वदति मुकुन्दे मन्दमान्दोलितांग्य,
श्चपलनयनभंन्योरंगलोलावरांग्यः ।
जहसुरभितरतं धीरता भावुकीनां,
न खलु रसिकचेतो रंजनायांगनानाम् ॥३३॥

श्रीलेत्यदिपूर्ववत्—
ग्रन्थे तत्करुणाकणेन जनिते गौबिन्दभावाम्बुधौ,
सर्गोऽयं विहितस्त्रयोदशतया संतं निमग्नं क्रियात् ॥३४॥

## चतुर्दश सर्गः

हरौ॰ यक्तमंजुस्मितेऽथ व्रजेशा,
पुरस्तां ढुदंचन्मुहुस्मेरलेशा ।
अधीरायमाना खिलांगेन्द्रियात्मा,
सखी काचिदेनं वभाषे जितात्मा ॥१॥

अपन्हुत्य या नो मनो वंशिका ते,
निसृष्टार्थदूती पदायैवदत्ते ।
अनन्यापहार्य्या विनोदैककार्य्या,
स्वनोद्धूतधैर्य्या सदा यात्वधर्य्या ॥२॥
या नः स्वान्तविमोहिनी तव मुखं या सर्व्वदा चुम्बिनी,
या ते चित्तविनोदिनी रसमयी वंशी क्व सा ब्रूह्यरं ।
ईद्दग्वाचि सखीजने प्रतिनिधीभूतेन्दुलेखा ददौ,
गोबिन्दं प्रतिसिध्य सस्मितसखीवक्त्रं विलोक्योत्तरम् ॥३॥
न युक्तो युंजानो विधुमुखि न सिद्धोऽयमिति किं,
बिजानीयाद्वंशीं कथमहरदस्मिन् स्वर्पित का ।
अहो वंश्या वार्त्ता विरमतु मनोऽप्यद्य सुरभौ,
विधोम्तारा षोडश्यहरदिह हेतुं वदतु का ॥४॥
अनुबदति मुकुन्दे सस्मिते राधिका ता,
सपलपति तदुक्ति श्रीमती वाग्विलासा ।
विदितमिति वमंते मोहनाय स्म पूर्ण,
विधुमजति विशाखा नेन्दुलेखाभिलासा ॥५॥
अथ बदति बिशाखा दत्तहस्तावयस्या,
भुजशिरसि किमर्थं वच्मि मिथ्यां सखि त्वं ।

बिधुमजति वसंते पूर्णमग्रे स्म चित्रा,
तदमलगुणलुब्धा प्राप्यचित्रं ही तत्वं ॥६॥
इदं ज्ञातं ज्ञातं प्रियसखि मया हंत सुधिया,
यदंकस्थां वंशीं मम हृतवती कापि रसिका ।
न चौरीं ब्रूमः कामपि सहचरी राजिषु वयं,
निमीलन्नेत्रस्य प्रविशतु ममांके मुरलिका ॥७॥
इति परिमीलन्नेत्रं माधव वंशीं प्रगृहाण कलत्रं ।
इति हरिहृदये कमलं न्यधित करस्थितमालिकासनालम् ॥८॥
स नेत्रे उन्मील्य प्रमदभरमुग्धस्मित सखी,
कुचौ कुम्भौ निघ्नन्मृदुलतरकंजेन मुमुदे ।
तदा हत्या रोमांचिततनुलतेयं रसिकया,
कुरंगाद्या सख्या मृदुहसितमुख्या निजगदे ॥९॥
प्रियसखि खंजीभूतं किमु तव हृदयं सरोजमुनिपातात् ।
प्रभवति परत्र गंतुं क्वचन न यद्दयितवरश्रीरूपात् ॥१०॥
सुदती गणेऽथ परिहासपरे,मदमन्दहासिनि मुरान्तकरे ।
मुरली जगावनवधानभरात् , प्रतिमुक्तरंध्रपवनप्रसरात् ॥११॥
अधिगम्य कुंजगतवेणुरवं, हरिराप यावदुपकुंजवरं ।
उरसोञ्चलेन मुरलीं सुमुखी, प्रजुगोप तावदथ कुंजे सखी ॥१२॥
कुंजद्वारे प्रतिगतहरिं वीक्ष्य रोमांचितांगी,
यांती जाड्यस्थगितचरणा लोचनानंभंगी ।
प्रागल्भ्येन प्रियसहचरं वारयंती सहासा,
सस्मेराभिर्न्यकथि सपरीहासमालीभिरेषा ॥१३॥
कंपयति तनुं हृदयं रोमांचयति जड़यति च धियं
वायुरसौ हैमंतः सखि न मुधा धाव नहि कान्तः ॥१४॥
व्रीडानम्रमुखी सखीजनगिरा सेयं सखी श्रीमती,
घर्म्माम्बुस्रवनाद्र सूक्ष्मवसना यत्नात्तनुं कुंचती ।

ईषच्चंचललोचना निजगदे ह्रोपसंरोधिना,
श्रीराधामुखलोकिना प्रणयिना नानारसोल्लासिना ॥१५॥

ज्ञातं ज्ञातं हरसि समयान्मामके चौरि कुंजे,
शून्ये नूनं कुसुमनिचयं भृंगपूंजेऽग्रगुंजे
गन्तुं संप्रत्यसि न निपुणा यत् धृता त्वं न याहि,
प्राप्यं चौरैर्दिनशतमिव स्याद्दिनैकं सता हि ॥१६॥

इत्युक्त्वा निकटे चलन्स्मितहतध्वांते निकुंजे स्वयं,
चांचल्यस्खलदंघ्रिरम्बुजमुखी भ्रु भंगविघ्नोप्ययं।
बाम्यौत्कंठ्यविलोलचित्तसफरीमालीमिमां प्रेमवान्,
निर्व्विघ्नस्तनपीडनाप्तपुलकां श्यामः परीरब्धवान् ॥१७॥

स्वीयांगद्युतिभिर्ग्रहीतमनसः सख्या जहारादरात्,
वंशीमंसपटीं विधूय स सुखं कृष्णोपि कक्षांतरात्।
येषां वाक्श्रुतिलोचनैः सकृदपि श्यामः समेतोऽतरे,
कापि स्याज्जडता महासुखमयी तेषां हि कम्मांतरे ॥१८॥

तया हृदि वयस्यया प्रणयरज्जुवद्धीकृतः,
पुनर्व्रजवनेश्वरीभुज-लताभिर्वंधान्वितः।
निधाय निजवक्षसि प्रियसखीं स गान्धर्विकां,
विवेश हरिराद्रुतो झटिति नीपदोलां स्वकाम ॥१९॥

आनन्देन परीहसद्भिरभितः पर्य्यावृतः स्त्रीजनै,
र्व्वंशीमोष्ठपुटे निधाय मधुरै रागं बितन्वन् स्वनैः।
गंडोत्कुंचनकुंचितेन नयनेनाराधयन् श्रीमतां,
वामे सुस्मितराधिकां विजयते वृन्दावनेन्दुः सतीम् ॥२०॥

हसंती सानन्द मधुरमधुरं प्रेमबिकला,
कलावत्या साकं रसभरविलोला रतिकला।
महार्घ्यं प्रेक्षायां रचितनिलयौ तौ मतिमती,
पदस्पर्शोदंचत् पुलककरमान्दोलितवती ॥२१॥

श्रीयुतौ सोत्सवौ राधिकामाधवौ तौ दृशा स्निग्धया चंचलीभूतया ।
लोकयन् तद्‌द्वयप्रेक्षणात्तन्मयः प्रोचिवानुत्स्मयः प्रेयसी संचयः ॥२२॥
तारुण्येन मनो रमेण बरया कांत्या सुधातुल्यया,
बाचा मोदियितुं मुहुः प्रियतमं का का न वा चेष्टते ।
किन्तु श्रीमति रधिके प्रियतया सर्व्वाधिका गोपिका,
चेतश्चोरकचित्तचौर्य्यचतुरा चार्व्वङ्गिचर्य्यास्ति ते ॥२३॥

यस्या श्रीचरणाब्जरेणुकणिकासम्पर्कसंशोभिते,
देहेऽस्माकमपि प्रियस्य सततं चेतश्चकोरायते ।
तस्यास्ते करुणा विनाजनि शतश्रान्त्याश्रु भाद्यर्जने,
नैव क्वापि हरेः कृपा नहि भवेत् प्रेमा जगन्मोहने ॥२४॥
हरिमुखसुधां यातां वंशी सतीह पपौ हि ते,
शिव शिव शिवत्यक्ता लज्जा त्वयापिहि यत् कृते ।
अपि हरति ते चौरीचेतौ वलेन हरेः कृते,
सखि सखि सरस्वत्या पुण्यं व्यधायि कियत्कृते ॥२५॥
नव्यमेघ नीलदेह ते पदाब्जमीक्षितुं,
स्वादबोध आप्तलोभ ईहते क ड्डवितुं ।
किन्तु तत्र जायते न वासनारमघातिनां,
क्षुद्रकाममध्यमानमानसेन दुःखिनाम् ॥२६॥
नवतोयदविग्रहचारुरुचा, हरिदंशुकवैद्युत कांत्यमुचा ।
अपि नृत्यति नंदति बर्हिगणः किमु चंचल मानुषलुब्धमनः ॥१७॥
श्रीराधे रसिके रसज्ञमुकुटे कृष्णप्रिये श्रीमति,
श्रीकृष्णांतरभिन्नभावरहिते श्रीकृष्णलीलावति ।
श्रीकृष्णाम्बुजमंजुलोचन लसद्वर्हावतंसिन् नवां,
नीलां नित्यमुदार्य्यं कान्त जयतं प्रीतिं विभ्रतं युवाम् ॥२८॥

गोविन्द व्रजसुन्दर व्रजपतानिम्स प्रवृद्धस्मित,
श्रीवृन्दावनमंजुकुंजललताकुंजादिखेलारत ।

कृष्णाशक्तजनानुरागिनि मुदं कृष्णप्रसादोद्भवां,
चित्ते नित्यमिते वरोरु जयतं प्रीतिं च दत्तं युवाम् ॥२६॥
गोबिन्द्रांघ्रिगुणानुकीर्त्तनहृतस्वांतेति कान्तेऽच्युते,
प्रेमोन्मादितमानसे हरियशोविस्ताररोमाञ्चिते ।
गोपीमानसचौरचारुचपलभ्रूनाद्यकांत्या नवा-
म्भोदाहंकृतिसारहार जयतं प्रीतिं च दत्तं युवाम् ॥३०॥
वन्धूकाधरवेणुवादनविधिव्यग्रायमाणांगुले,
विश्वानंददमन्दमन्दहसनशोन्मीलिरोमावले ।
श्रीकृष्णाधरवंशिका सुमधुरध्वन्यामृतभृशोत्के,
? शिवांशाद्धनद्विजतृप्तिदात्रि जयतं प्रीतिं च दत्तं युवाम् ॥३१॥
कृष्णानन्दकरांगभंगसुभगे मानावशानेन्तरे,
द्रागुद्दीपितकान्तसंगबिरहव्यामोहमुग्धांतरे ।
भक्तप्रेमवशीकृतत्रिजगतीसंतोषमूर्त्ते भवा-
म्भोधित्राणदनामधेय जयतं प्रीतिं च दत्तं युवाम् ॥३२॥
ब्रूवतीरित्यथ दयया स सुखमुबाचावतीर्य्य दोलायाः,।
परिरभ्य सखीः स्वीया राधा साधारणप्रणया ॥३३॥
प्रेमरसं हे सुमते कांक्षसि चेन्नन्दसुते ।
आशु मनोवांछितदं कीर्त्तय तन्नित्यमिदम् ॥३४॥
श्रीलेत्यादि पूर्ववत्—
ग्रन्थे तत्करुणाकणेन जनिते धीमिन्मनोमन्दरं,
सर्गः सुष्टु चतुर्दशो हरिपदप्रेमाब्धिमग्नं क्रियात् ॥६५॥

पंचदश सर्गः

हे वृन्दे अयि ललिते अयि विशाखे,
हे चित्रे जय हरिसेविपंचशाखे
गायन्ती गुरुनिकटेऽपि कृष्णकीर्त्तिं
या व्याजान्नहि जिहिते क्षणं निवृत्तिम् ॥१॥

श्यामो वाखिलतिमिरच्चयोऽज्वलः स्यात ,
शांतात्मा हरिरथवा समुद्धतः स्यात् ।
साधुः स्यादथ नवनीततस्करोरतु,
क्वाप्येनं मनसि बिना न वोऽस्ति वस्तु ॥२॥
आर्द्रात्मा सखि कठिनोऽथवा गुणज्ञः,
प्रज्ञावान् स भवतु वापराधविज्ञः ।
सौन्दर्य्याम्बुधिरथवास्त्वसुन्दरो वः,
श्यामोऽयं भवति गतिः स एक एव ॥३॥
जानेऽहं सखि हरिणा हृतं दृगस्त्रं,
कालिन्दीतटभुवि केवलं न बस्त्रं ।
तद्बन्धुं लघु चलतैनमत्र चौरं,
वाक्यैकं श्रृणु शपनं ममास्तु बद्धम् ॥४॥
बद्धो नो यदि सखि दोर्युगेन कान्त,
स्तद्युष्मद्भुजलतिकागुणो नतांतः ।
श्रुत्वेदं सदय सखी वचो विशाखा,
बोचत्तन्मृदुकरनुन्न पंचशाखा ॥५॥
पीयूषं तव कृपया पिबेन्मुकुन्द,
प्रेमैनं सखि बशयेत्तदापि मन्दः ।
अस्माभिस्तव कृपया धृतोऽस्ति यामि,
त्वद्वाक्यं परमधुना श्रृणोमि यामि ॥६॥
इत्युक्त्वा मृदु मधुरं विशाखिकायां,
धावन्त्यां हरिरचलत् क्वचिल्लतायां ।
रुद्धांघ्रि हरिमनुरागश्रृंखलेन,
तं दध्रे लघु निभृते करे करेण ॥७॥
मा याहि क्वनु विपिने द्रवन्नुपैय,
श्चोरस्त्वं स हि कथितो वयस्यया यः ।

तां व्याजादिति परिरभ्य गंतुकामां,
धृत्वा स स्तनवसने जगाद वामाम् ॥८॥
विश्वेषामपि मनसः प्रकाशधन्यं, कारुण्याद्विधिरसृजद्यमंकशून्यं ।
अन्योक्त्या कथमदयेद्य कीर्त्तिचन्द्रे तस्मिन्मे मरचि कालिमा सुसांद्रे ॥६
जानेऽहं सखि वितथं ममैव चौर्य्यं, सर्व्वस्मिन्प्रथयसि दुर्यशोऽपकार्य्यं ।
दिष्ट्यात्वामहमगमं मृषोक्तिनेहि प्रौढ़िं मा मम निकटे कृथा सुदेहि १०
बाहुभ्यां बहुपुलकानुरंजिताभ्यां,
कृष्णेन स्थिरपुलकस्तनीमृदुभ्यां ।
आकृष्योरसि निहिताप्यसूयये वा,
वोचत् सा खलु रसिका स्ववामभावा ॥११॥
जानेऽहं विधुमिममेत्य सांकबिन्दुं,
यत्नात्ते विधिरसृजत् यशोमयेन्दुं ।
एकोऽयं जयति धुताखिलांकपंक,
श्चन्द्रोऽयं यदुदयतो भवेदनंकः ॥१२॥
लोकेषु त्रिषु सुखदा यशोविधोस्ते,
ज्योत्स्नेयं बुधकथिता कथाद्भुतास्ते ।
दैवेन प्रविशति चेतद्भवो गवाक्षे,
नैर्मल्यं नयति हृदम्बुजे विपक्षे ॥१३॥
किन्तु त्वं बुधगणसम्मतोऽसि चौरो,
नैषोक्तिर्म्मम वितथा वकीशरारो ।
अप्यन्तर्हरसि हि दृकूतरंगसंगात्,
नो गव्यं परमहृथा व्रजेषु रंगात् ॥१४॥
इत्यादिस्मितपरिरंभणोक्तिभिः सा संभुक्ता व्रजविधुना तिरोनतांशा ।
सव्रीड़ा परिददृशे सखीभिरारादूचे च स्मितकुतुकात्तदेकसारा ॥१५॥
एह्येहि प्रियसखि गोपितौ कुचौ यत्,
युक्तं हृतकणकाद्रिकांतिकौ यत् ।

वस्त्रांते मुखविधुंगोपनं कथं ते यत्,
केलिस्मितदमितो मृगांक आस्ते ॥१६॥

कस्मिंश्चिन्न चलितवान्मनः कलापी,
यस्यास्ते पितृगृहवर्द्धिते कदापि।
अद्य न्दीवरयति किं शि तावतंशा,
चेतस्यास्तव चपले चला दृगेषा ॥१७॥
बंधूके व्रणमकरोत् षडंघ्रिरेतत्,कुम्भे ते हरिनखरक्षतं तथैतत।
संघट्टात्तव बिगतं च कुंकुमांकं,मध्वर्थं बनमगमः क्वं नष्टशंकम् ॥१८॥
इत्युक्ते मृदुमधुराक्षरं स्वसख्या,मोदांभोनिधिमवगाह्य हास्यमुख्या।
अन्योन्यं चिरमुपगुह्य निश्चलांगे, कर्त्तव्यं वुवुधतुरात्मनो न रंगे॥१६
ता एवंबिधबिबिधोपहासभासै,
रक्रीडन् ब्रजविधुना मनोभिलाषैः।
दीर्घापि क्षणवदभून्निशा च तासां,
कल्पेप्यच्युतसुखतो यदल्प आसाम् ॥२०॥
गंधाद्यैरघदमनातिलब्धमानाः,
प्रेम्ना तौ युवतिगणानिषेवमानाः।
अनन्यात्परमनयोः सुखैः सुखानां,
नैरंतर्यं दधुरितरेषु दुर्लभानाम् ॥२१॥
काचित् स्व प्रभुतिलकं सकुंकुमेन,
सानन्दं रचयति सान्द्रचंदनेन।
आकेशं दयितवरे प्रहृष्टलोम्नि,
प्रोद्वृत्ता स्वयमलका रसैकधाम्नि ॥२२॥

ताराद्या रसबिवशा धृतप्रहृष्टि,
श्रीकृष्णोपरि विदधुः प्रसूनवृष्टिम्।
ते तासां निजहृद एव मोहनार्थाः,
स्वक्षिप्ताः स्मरविशिखाः स्युरेव सार्थाः ॥२३॥

कस्तूरी शितकुसुमश्रजं प्रियस्य, निर्म्मायोरसि निदधे महोरसोस्य ।
सा माला मरकतपर्व्वतात् श्रवंती, गंगेवाद्भुतमहिमा बभार कांती: ॥२४

वासंती प्रियतमयो: प्रलंदिकेशान् ,
संबद्धान् कुसुमयुतान्व्यधात्सुवेशान् ।
श्रीमत्या अथ कुसुमालिबद्धवेण्यां,
शोभाभूत् स्मरधनुषेव बद्धमौर्व्याम ॥२५॥

पार्श्वस्थे मृदु मृदुमाधबीधनिष्ठे, सेवाते शशिसमचामरैकनिष्ठे ।
सेवित्वा हृदि मृदुना करेण रूप, मंजर्य्याच्युतचरणं प्रमोदमाप ॥२६॥
ताम्वुलं लघु रतिमंजरी प्रदातुं, संप्रोक्ताप्यलमिब मुञ्जडा न दातुं ।
मुग्धंह्रिप्रियतमसेवनप्रमोदात् , संस्तभ्य प्रियतमयोस्तदाधरेऽदात् ॥२७
आक्रीड़े कुसुममयस्य कन्दुकस्याप्याघातान्मृदुवपुषो: श्रमोध्र् वं स्यात् ।
इत्युक्त्वा सुरभिजलैसिताभ्रकैश्च प्रेयोंगेष्वथ मदनालसा सिषेच॥२८॥

सद्गंधै: शुचिकुशुमैश्चकार शय्यां,
स्वालीनां सपदि चयो निकुंजदर्य्यां ।
उन्मीलत् परिमलमाधवीनिकुंजे,
तस्यां स प्रियतम माधव: पप्रंजे ॥२९॥
सद्वाक्यैरथ ललिता तथा विशाखा, पार्श्वस्था विहसति दत्तपंचशाखा ।
वृन्दोक्त्या सह दयित: प्रमोदमय्यां, शय्यायां हरिरशयिष्ट पुष्पमय्याम्
ता एवं प्रियपदसेबनामृताब्धौ, स्नातास्तत् स्मितसुरनिम्नगा सुहृब्धौ ।
सर्व्वोर्द्धां स्थितिमतुलां सदैव यैंति, श्रीकृष्णप्रणयपरा अहो जयंति ३१

अथ प्रेयो दोर्व्वल्युपहितशिरा: कुंजवरे,
शयना सानन्दं शशिकिरणसांकर्य्यशिशिरे ।
मुखेन्दोरामीलन्नयनघनघूर्णामधुरया,
श्रिया सेयं गोपीरमणमधिनोन्सादनितया ॥३२॥
वृन्दे त्वं विरम क्षणं सखि चिरं श्रान्तासि कस्तूरिके,
वाक्यान्मे कमले शयीत भवती स्वल्पा निशास्त्यालिके ।

शेते काचन काचनेति बिबिधप्राणेश्वरी बोधना,
दन्या तत्परिचर्ययैव सुखिता नाबोधि निद्रां मनाक् ॥३३॥
अथ मधुकरगुंजे राधया मंजुकुंजे,
हरिरतनुत निद्रां प्रेयसीप्रेमभद्रां ।
विदधुरपि वयस्यास्तन्नियोगैकवश्या,
हरिरसमयनिद्रांतन्मयस्वप्नमुद्राम् ॥३४॥
यत्र प्रेममये तरंगनिचये गोपीगणो युज्यते,
यस्मिन् भक्तितिमिंगिलो न गणयन्मोद्वं नदं मोदते ।
अंगं यद्रससंगमे सपुलकं शान्तादिरत्नोल्लसत्,
सोऽयं रम्यसुधाम्बुधिर्व्विजयते श्रीकृष्णलीलामयः ॥३५॥
कृष्णप्रेमसुधाब्धिमग्नमनसो रूपस्वरूपादयः,
सिद्धा यत् कृपयैव संप्रति वयं सर्व्वे च निर्व्याधयः ।
श्रीचैतन्यहरेर्द्दयामयतनोस्तस्योपहारो वरो,
ग्रन्थः स्यान्मिहिरस्य दीपवदसावामोदनामागुरोः ॥३६॥
श्रीलेत्यादि पूर्व्ववत् । —
ग्रन्थे तत्करुणाकणेन जनिते धीमन्मनो मंदरं
सर्गः पंचदशो हरिप्रणयिता दुग्धाब्धिमग्नं क्रियात् ॥३७॥
विराजंते यस्मिन् कमलयुगले भृंगनिकराः,
ह्रदावर्त्ते मेघान्तरकरिकरः श्रीस्तदुपरि ।
बिभात्यावर्त्तान्ते मकरसफरीसंयुतशशी,
अगाधः श्यामोऽब्धिः स इह रसमूर्त्तिर्विजयते ॥३८॥
इति श्रीअनूपनारायणशर्म्मतर्कशिरोमणिभट्टाचार्य्यबिरचित-
सामोदाख्यं महाकाव्यं समाप्तम् ॥३६॥

——::o::——

श्रीसमंत १८६० मिती भादौंबदी १
लीषतं काम्ये मध्ये हुलासीराम
ब्रावन के दुकानपर ॥

## विचारणीया

अस्य आमोदाख्यमहाकाव्यस्य रचयिता श्रीअनूपनारायणभट्टाचार्यमहाशयः श्रीलक्ष्मीनारायणमहोदयस्य पुत्रोऽभवत्। स्वयं ग्रन्थकारेण प्रत्येकाध्यायस्य परिशिष्टभागे निजपरिचयं इत्थं प्रकारेण प्रदत्तम्-यथा-"श्रीला कृष्णकथामृतं करुणया लक्ष्म्यग्रनारायणापत्यं पाययति स्म चम्पकलता यानूपनारायणम्। ग्रन्थे तत्करुणाकणेन जनिते धीमन्मनो मन्दरं सर्गोऽयं प्रथमो हरिप्रणयिता दुग्धाब्धिमग्नं क्रियात्" "श्रीलेत्यादिपूर्ववत्। श्यामप्रेमसुधासमुद्रनिलयं सर्गो द्वितीयः क्रियात्" "श्यामप्रेमसुधासमुद्रबसतिं सर्गस्तृतीयः क्रियात् इत्यादि" "सर्गः पंचदश हरिप्रणयिता दुग्धाब्धिमग्नं क्रियात्" इति ग्रन्थपरिशिष्टभागे। परिशिष्टे-"कृष्णप्रेमसुधाब्धिमग्नमनसो रूपस्वरूपादयः, सिद्धा यत्कृपयैव संप्रति वयं सर्वे च निर्व्याधयः। श्रीचैतन्यहरेर्दयामयतनोस्तस्योपहारो वरो, ग्रन्थः स्यान्मिहिरस्य दीपवदसावामोदनामागुरोः"। अतः ग्रन्थकारस्य श्रीचैतन्यसम्प्रदायानुगतत्वं स्फुटमायातम्।

ग्रन्थारम्भे महाप्रभोः श्रीचैतन्यदेवस्य मंगलाचरणश्लोकं यथार्थानुगतत्वं एवं स्वस्य तदीयोपासकत्वं कथयति। यथा-"हरिप्रेमोन्मत्तः प्रभुरनुसरन् यस्त्रिदशतां, परानदस्वादी विदधदवतीर्य सदयतां। सदोत्तंसी भूयान्निखिलसुमनो नन्दनतनोः, शचीसूनोरस्यामलचरणपद्मं मम तनोः। अस्य ग्रंथकारस्य सीताशतककाव्यस्य रचनं दृष्ट्वा श्रीरामचन्द्रोपासकत्वं केचित् पण्डिताः परिकल्पयन्ति तन्न समीचिनं मन्यामहे। आमोदाख्यमहाकाव्येऽस्मिन् चैतन्यसम्प्रदायस्य रसपरिपाटी स्फुटतया वरीवर्त्ती नरीनर्त्ती च तदुपासनातथ्यम्। अतः केवलं काव्यदृष्ट्या सीताशतकस्य रचना परिभाति। ग्रन्थकारस्य दैन्यात्मकं मंगलाचरणं ग्रन्थस्य सौष्ठवं परिवर्द्धयति तथा परिकथयति च ग्रन्थश्रेष्ठत्वम्-यथा

"किमेता मद्वक्त्रान्निरगुरिति गृह्णीत न बुधा, निबद्धा श्रीराधाव्रज-विधुगुणाम्रेडनसुधाः। जगन्नाथद्वैतोद्भवभवमहामोहशमकं प्रसादं काकास्यादूगलितमपि विष्णोस्त्यजति कः।"

परिशिष्टभागस्य पुष्पिकायां" इतिश्रीअनूपनारायणशर्म्मतर्कशिरोमणिभट्टाचार्य्यविरचितमामोदाख्यं महाकाव्यं समाप्तम्""श्रीसम्वत् १८६०मितीभादों ब॰ी १ लीखतं काम्ये मध्ये हुलासीराम ब्रावन के दुकान पर"इति अस्मात् १८६० सम्वतात् प्राक्काले हि ग्रन्थस्य निर्म्माणं ग्रन्थकारस्य स्थितिर्वा यातम्। अस्मिन् काव्ये पंचदश सर्गाः आसन। श्रीराधाकृष्णयोर्लीलावैशिष्ट्यं काव्यद्वारेण यादृक् परिवेशितं तत् आधुनिककाव्येषु विरलं स्यात्। द्वयोपूर्वराग-मान-प्रेमवैचित्र्यमिलनादि यावतीयश्रृंगारभेदा अस्मिन् महाकाव्ये स्फुटं वर्णिताः। ग्रंथकारस्य "ब्रह्मसूत्रस्य समञ्जसानाम्नी वृत्तिः" (कलिकाता संस्कृतसाहित्यपरिषत् स० ८५५) भागवतस्य विद्वद्विनोदिनीसूचिका नाम्नी टीका (संस्कृत कलेक्शन्स बनारस १८६७-५६०१, पी. ६) श्रीसीताशतकाव्यं काव्यं इति अपरा त्रयो ग्रन्थाः सन्ति। अस्य आमोदमहाकाव्यस्य एका प्राचीना हस्तलिपीका मन्निकटे आस्ते। यां दृष्ट्वा अयं ग्रन्थः प्रकाशं नीतः। प्राचीनग्रन्थोद्धारे अवश्य अशुद्धयादि-बहुत्रुटयः भवन्ति अतः अस्मिन् ग्रन्थप्रकाशे ये त्रुटयः भवन्ति तान् पण्डिताः क्षम्यध्वं इति।

कृष्णदास